# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ जुलै - २००३ सञ्चिका - ४



पुराणकथावली

२२



विद्यावान्
(वेतालकथा)

१५



मायासरोवरः - १६

०९



विघ्नेश्वरः - १९

६१



## अन्तरङ्गम्

★ उत्तमः प्रतिवेशी ...८ ★ मायासरोवरः - १६ ...९
★ विद्यावान् ...१५ ★ वस्तुस्थितिः तु एषा ...२१
★ चतुरः यात्रिकः ...२२ ★ भारतदर्शनम् ...२५
★ मातापुत्रसम्बन्धः ...२६ ★ रथयात्रा श्रीजगन्नाथचरितं च ...३१
★ वार्ताविशेषः ...५१ ★ व्याघ्राय स्पर्धाह्वानं वराहस्य ...५२
★ अहो, फलितं भाग्यम् ...५६
★ भारतम् अवगम्यताम् ...६० ★ विघ्नेश्वरः - १९ ...६१
★ राज्ञः कृपा ...६७ ★ परोपकारः ...७०
★ अजेयः गरुडः - २६ ...७२
★ कालोऽयं विनोदस्य ...७६
★ चित्रशीर्षिकास्पर्धा ...७८

**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of***
***Chandamama India Ltd.***
to
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुकपोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



संस्थापकौ –
चक्रपाणिः नागिरेड्डी च

# महात्मनः संस्मरणम्

स्वातन्त्र्यानन्तरं भारतदेशे बहुषु क्षेत्रेषु विशेषप्रगतिः साधिता अस्ति । किन्तु तेषां विषये वयम् अभिमानं वहन्तः न स्मः । अस्मद्देशः इव एव क्लेशदुःखादीनि सम्मुखीकुर्वद्भिः देशैः सह आत्मनः तोलनम् अपि न कुर्मः । तैः किं कृतम् इति न पश्यामः । भारतेन यदा स्वातन्त्र्यं प्राप्तं तदा एव प्रायः स्वातन्त्र्यं प्राप्तं जपानदेशेन । किन्तु तेन साधितां प्रगतिं वर्णयितुम् एकः एव शब्दः अलम् – 'अत्यद्भुतम्' इति ।

प्रगतिः यथा न साध्येत, अभिवृद्धिः यथा न प्राप्येत तथा विदेशीयशासनं तु नास्ति इदानीम् । यथा अस्माकं शक्तिः क्षीणा स्यात्, अधिकारग्रहणाय वयं पङ्कपतिताः इव यथा क्लिश्येम तथा तु कोऽपि न करोति ।

वयम् एव चिन्तयामः यत् यावत् अधिकारपदे वयं न भवामः तावत् देशसेवा कर्तुं न शक्या इति । वस्तुस्थितिः तु तथा नास्ति । देशसेवायै सन्ति सहस्रं मार्गाः । प्रजाप्रभुत्वमौल्यस्य उन्नयनं, भ्रष्टाचारं विरुध्य सङ्ग्रामः, मूल्यविचारादिकम् अत्यजद्भिः सामूहिककार्याय यत्नः इत्यादयः प्रमुखाः कार्यक्रमाः अद्य नितान्तम् आवश्यकाः । एतादृशं कार्यं कृतवत्सु अग्रणीः अस्ति सम्मान्यः जयप्रकाशनारायणः । सः प्रमाणीकृतवान् अस्ति यत् अधिकारपदबलं नास्ति चेदपि कश्चित् जनानुरागी भवितुम् अर्हति इति ।

सः शतात् वर्षेभ्यः पूर्वं जातः । तस्य जन्मशतकोत्सवः आत्मावलोकनस्य कारणं भवतु । अभिवर्धनाय भारतस्य सन्ति एव अवकाशाः । जयप्रकाशनारायणेन एतत् सम्यक् प्रतिपादितम् अस्ति । यदि वयम् अन्तरङ्गध्वनिं श्रोतुं शक्नुयाम तर्हि तस्य कथनस्य प्रतिध्वनिः श्रूयेत निश्चयेन ।

Visit us at : http://www.chandamama.org

सम्पादकः – विश्वम्

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-२२

अत्र केचन साहित्यक्षेत्रीयाः नायकाः उल्लिखिताः । किं तान् अभिज्ञातुं शक्नुयुः भवन्तः ?

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



1. अहं भारतीयः आंग्लभाषालेखकः । कुली, अस्पृश्यता, एका कलिका उभे पर्णे च इत्यादयः मम कृतयः । मम नाम किम् ?

.................................................................

2. अहं हिन्दीकविः । मम प्रसिद्धा कृतिः - मधुशाला इति । सा च प्रसिद्धिः मरणोत्तरं प्राप्ता । मम नाम किम् इति किं भवन्तः जानन्ति ?

.................................................................

3. अहं क्रान्तिकारकः तमिळुकविः । मम अधिकाधिककृतयः समाजपरिष्कारम् अवलम्ब्य सन्ति । मम प्रसिद्धा कृतिः 'अगल्विळाक्कु' । मम नाम किम् ?

.................................................................

4. अहं बङ्गालीयः कृतिकारः । मया 'चरित्रवान्' 'देवदासः' चेति कृती रचिते । मम नाम किम् ?

.................................................................

5. १९७८ तमे वर्षे 'कायर'कृतिविषये मया ज्ञानपीठप्रशस्तिः प्राप्ता । मया 'चम्मीन्'-नामिका कृतिः अपि रचिता । एताम् आधारीकृत्य निर्मितं चलनचित्रं प्रसिद्धं जातम् । अहं कः ? मम नामाभिज्ञानाय अपरः सङ्केतः - 'अहं केरलीयः' ।

.................................................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** .................................................................

.................................................................

.................................................................

.................................................................

भागग्रहीतुः नाम .................................................................

वयः .............................. कक्ष्या ..............................

सङ्केतः .................................................................

.................................................................

.................................................................

पिन् .............................. दूरवाणी ..............................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-२२**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, **चेन्नै** - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५,अगस्ट्, २००३

***नियमाः*** -

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

**भवद्भ्यः पारितोषिकं ददाति**



# उत्तमः प्रतिवेशी

केशवपुरस्य कस्मिंश्चित् मार्गे निवसतः स्म पुरुषोत्तमः रघुनाथः च । तौ प्रतिवेशिनौ । उभौ अपि धनिकौ एव । स्वस्य आढ्यत्वस्य प्रदर्शने उभयोः अपि महती रुचिः । उभयोः अपि गृहयोः सदा विवादः प्रचलति स्म । एकस्य गृहस्य कश्चन अवकरः अपरस्य गृहस्य अङ्गणे पतति चेत् विवादः । एकस्य गृहस्य वृक्षस्य शाखा अपरस्य गृहपरिसरे प्रसरति चेत् कोलाहलः । उभयगृहयोः गृहिण्यौ अपि एतादृशेषु विवादेषु भागं वहतः स्म ।

एतादृशाः कलहविवादादयः दीर्घकालं यावत् प्रवृत्ताः । तयोः न कोऽपि स्नेहहस्तप्रसारणे उत्सुकः, एतस्य विवादस्य स्थगने आसक्तः वा । तेषु एव दिनेषु रघुनाथेन श्रुतं यत् पार्श्वमार्गे एकम् उत्तमं गृहं विक्रयणाय अस्ति इति । सः झटिति तत् गृहं क्रीत्वा स्वकीयं गृहं सुगन्धिपुरस्य धनिकाय भाग्येशाय विक्रीतवान् ।

स्वगृहं रिक्तीकुर्वन् रघुनाथः उपहासमिश्रितेन स्वरेण अवदत् - ''पार्श्वमार्गे स्थितं विशालं गृहं क्रीतम् अस्माभिः । इतः परम् उत्तमानां प्रतिवेशिनां सम्बन्धः प्राप्यते अस्माभिः'' इति ।

''अहम् अपि उत्तमस्य प्रतिवेशिनः सम्बन्धं प्राप्नुवन् अस्मि'' इति उक्तवान् पुरुषोत्तमः ।

''कथम् एतत् सम्भवेत् ? केशवपुरे एकम् एव गृहं विक्रयणाय आसीत् । तच्च मया क्रीतम् । किं भवान् एतं ग्रामं परित्यज्य अन्यत्र गमनं चिन्तयन् अस्ति ?'' इति आश्चर्येण पृष्टवान् रघुनाथः ।

''एतत् नगरं किमर्थं परित्यज्येत अस्माभिः ? वयम् अत्रैव वासं करिष्यामः । उत्तमं प्रतिवेशिनम् अपि प्राप्स्यामः । भवतः ऋते यः अत्र वसेत् सः निश्चयेन भवेत् उत्तमः एव'' इति पुरुषोत्तमः अपि उपहासमिश्रितेन स्वरेण उक्त्वा उच्चैः हसितवान् ।





# मायासरोवरः

## १६

*[आकाशे डयमानैः हंसैः उह्यमाने रथे उपविष्टः मायासरोवरेश्वरः ततः च्युतः सन् नरभक्षकैः उष्णीकरणाय स्थापिते जलभाण्डे अपतत् । सः आत्मना सह पतितयोः अन्ययोः विषयम् अपि गणाचार्यम् उक्तवान् । यदा ते सर्वे तयोः अन्वेषणाय निर्गताः तदा तैः सिद्धसाधकस्य उद्घोषः श्रुतः । तदनन्तरम् ....]*

सिद्धसाधकस्य कण्ठात् निर्गतं 'जय महाकाल !' इति जयघोषं श्रुत्वा मायासरोवरेश्वरः क्षणकालं स्तब्धः । किञ्चिदिव भीतः सन् सः गमनं स्थगितवान् । गणाचार्यः अपि आश्चर्येण परितः दृष्टिं प्रसारितवान् । चत्वारः नरभक्षकाः भटाः उद्घोषकः कः इति ज्ञातुम् इच्छन्तः ध्वनेः दिशम् अनुसृतवन्तः ।

तदा मायासरोवरेश्वरः गणाचार्यम् अवदत् – ''भवान् स्वभटान् आज्ञापयतु यत् प्रत्यागन्तव्यम् इति । यतः सः उद्घोषः अस्ति कस्यचित् महाकालभक्तस्य । तस्य मन्त्रशक्तेः पुरतः भवतां शूलकुन्तादयः अकिञ्चित्कराः स्युः एव'' इति ।

एतत् श्रुत्वा गणाचार्यः उच्चैः हसन् अवदत् – ''नरभक्षकाः वयम् एतादृशेभ्यः मन्त्रतन्त्रादिभ्यः भीताः न भवामः । वन्यदेवतायाः कृपातः अस्माभिः अद्य अपरः अपि आहारत्वेन प्राप्यमाणः अस्ति'' इति ।

यावत् गणाचार्यः एतावत् वदन् आसीत्



तावता ते चत्वारः भटाः धावन्तः प्रत्यागत्य दीर्घं निश्श्वसन्तः अवदन् - ''गणाचार्य-वर्य ! वयम् इदानीम् अपायग्रस्ताः स्मः । नरवानरं, विलक्षणं जलगजं च आरुह्य यमदूताः इत एव आगच्छन्तः सन्ति'' इति ।

एतत् श्रुतवान् गणाचार्यः भीतः जातः । मायासरोवरेश्वरः अपि भीत्या कम्पमानः जातः । अनतिदूरे वृक्षाणां मध्ये नरवानरम् आरुह्य शूलम् उन्नीय आगच्छन् सिद्ध-साधकः ताभ्यां दृष्टः ।

''भो भोः, इतः पलायनम् एव वरम् इति भाति । भवत्सु कश्चित् शूरसिंहसमीपं गत्वा यमदूतानाम् एतेषाम् आगमनवार्तां निवेदयतु । यदि वयम् एतेषां दृष्टिपथम् आगच्छेम तर्हि अस्माकं जातिः एव उन्मूलिता भवेत् । अल्पोऽपि विलम्बः सर्वनाशाय स्यात्'' इति भटान् उक्त्वा ततः पलायनाय उद्युक्तः जातः गणाचार्यः ।

तावता 'जय महाकाल !' इति पुनरपि सकृत् उद्घोष्य सिद्धसाधकः पलायनरतानां तेषां पुरतः स्थित्वा कठोरस्वरेण अवदत् - ''किं पलायनेन ? के भवन्तः ? किमर्थम् अत्र आगतं भवद्भिः ? काञ्चनमाला नाम राजकुमारी हंसरथात् एतस्मिन् एव प्रदेशे पतिता अस्ति । किं भवत्सु कोऽपि तां दृष्टवान् ?'' इति ।

सिद्धसाधकः कस्याः विषयं पृच्छन् अस्ति इति गणाचार्येण न अवगतम् । सः वृक्षस्य पृष्ठतः स्थित्वा पलायनमार्गं चिन्तयन्तं मायासरोवरेश्वरं प्रदर्शयन् अवदत् - ''अस्माकम् अरण्यदेवतया आहाररूपेण प्रेषितः जनः अयम् एव । भवता यस्याः विषयः पृच्छ्यते तस्याः विषयम् अयं जानीयात् कदाचित् । वयं तु किमपि न जानीमः । भवान् तम् एव पृच्छतु'' इति ।

सिद्धसाधकः धावनोद्यतानां नर-भक्षकाणां धावनस्य निवारणे एव उद्युक्तः आसीत् इत्यतः तेन मायासरोवरेश्वरः न लक्षितः आसीत् । इदानीं तेन सः दृष्टः । अतः सः तम् अवदत् - ''अये महा-किरीटधारिन् ! किं भवान् एव माया-सरोवरेश्वरः नाम ? मया श्रुतम् आसीत् यत् भवान् महाशक्तिशाली इति । इदानीं तु भासते यत् भवान् भीरुः इति । यदि चोरः इव पलायनं भवान् चिन्तयेत् तर्हि एतत् शूलं भवतः उदरं विदारयिष्यति'' इति ।

सिद्धासाधकस्य वचनानि श्रुत्वा माया-सरोवरेश्वरः कुपितः सन् हस्तेन खड्गं

गृहीतवान् । क्षणकालानन्तरं कोपं निगृह्य सः अवदत् - ''भवतः वेषभूषादीनां दर्शनात् भासते यत् भवान् कश्चन कापालिकः इति । भवादृशं न स्पृशति मम खड्गः । प्राणाः प्रियाः यदि स्युः तर्हि व्यर्थवचनानि उपसंहृत्य इतः निर्गच्छतु'' इति ।

''अहमस्मि सिद्धसाधकः महाकालस्य भक्तः । भवन्तं सम्मुखीकर्तुं समर्थः मम सेवकः कश्चन अस्ति । अहं तं राजकुमार्याः अन्वेषणाय प्रेषितवान् अस्मि । किं भवान् तेन सह युद्धं कर्तुम् इच्छति ? किम् अहं तं प्रत्यानयानि ?'' इति मायासरोवरेश्वरम् उक्त्वा सिद्धसाधकः उच्चस्वरेण - ''अये जलवृक ! कुत्रास्ति भवान् ? भवतः परमशत्रुः अत्र उपस्थितः अस्ति । तस्य सामर्थ्यं किञ्चित् परिशीलयतु तावत्'' इति अवदत् ।

अनतिदूरे एव स्थितः जलवृकराक्षसः एतत् श्रुत्वा शिलागदां गृहीत्वा उत्प्लवमानः - ''सः दुष्टः मायासरोवरेश्वरः कुत्रास्ति ? मम एतया शिलागदया तम् अहं संहरिष्यामि'' इति वदन् अग्रे आगतवान् ।

जलवृकराक्षसः यदा वेगेन अग्रे गच्छन् आसीत् तदा सालवृक्षाणां मध्यतः मकरकेतुः स्वस्य जलग्रहम् अग्रे प्रेरयन् जलवृकस्य मार्गम् अवरुद्धवान् । जलग्रहः सकृत् उच्चैः घीङ्कारं कृत्वा शुण्डाम् उन्नीय जलवृकं ग्रहीतुम् उद्युक्तः । किन्तु जलवृकः सकृत् उत्प्लुत्य आत्मरक्षणं कृतवान् । ततः द्वित्राणि पदानि पृष्ठतः संस्थाप्य स्वस्य शिलागदया जलग्रहं प्रहृतवान् । एतत् दृष्ट्वा मकरकेतुः महता कोपेन - ''अये, जलवृक-



राक्षस ! एषोऽहं भवन्तं यमलोकं प्रेषयिष्यामि'' इति वदन् जलवृकराक्षसस्य कण्ठम् उद्दिश्य छुरिकां क्षिप्तवान् वेगेन । सा च छुरिका लक्ष्यच्युता सती जलवृकस्य स्कन्धे व्रणम् अकरोत् ।

एतत् दृष्ट्वा नरवानरस्य उपरि उपविष्टः सिद्धसाधकः क्रोधेन - ''अग्रे जयशीलः मां कामं निन्दतु नाम । इदानीं तु अहं मायासरोवरेश्वरं मकरकेतुं च मृत्युलोकातिथी करिष्यामि'' इति वदन् नरवानरं प्रेरितवान् ।

तस्मिन् एव क्षणे करताडनध्वनिः शीत्कारः च श्रुतः । आश्चर्यं प्राप्नुवन् सिद्धसाधकः परिवृत्य अपश्यत् । तं परितः वृक्षाणां मध्ये, गुल्मानां पृष्ठतः च अनेके नरभक्षकाः स्थिताः आसन् । तेषां नायकः शूरसिंहः शूलं हस्तेन गृहीत्वा अग्रे आगच्छन् अवदत् - ''गणाचार्य ! वनदेवता



एतावतः जनान् आहाररूपेण प्रेषितवती इति तु आश्चर्याय । अस्माकं देवी भक्तानां विषये कल्पवृक्षायते'' इति ।

सिद्धसाधकः नरभक्षकाणां नायकस्य शूरसिंहस्य वचनं श्रुतवान् । शूरसिंहस्य अनुचराः महता उत्साहेन अग्रे आगच्छन्तः आसन् । 'इदानीं न केवलं मकरकेतुप्रभृतीनाम्, अपि तु ममापि प्राणाः अपायग्रस्ताः सन्ति' इति अवगतवता सिद्धसाधकेन नरवानरः मकरकेतोः दिशि प्रेरितः ।

मकरकेतुः व्रणितस्य जलग्रहस्य शिरसि हस्तं संस्थाप्य तं सान्त्वयन् आसीत् । जलग्रहस्य पृष्ठभागे प्रीत्या हस्तः चालितः तेन । यदा जलग्रहः उत्थितवान् तदा मकरकेतुः तदुपरि उपविश्य अनतिदूरे स्थितं मायासरोवरेश्वरम् अवदत् – ''भवान् कृपया एतस्य जलग्रहस्य उपरि उपविशतु । एषः सिद्धसाधकः यद्यपि आवेशशीलः, तथापि मृदुहृदयः उदारः च । वैद्यदेवः जयशीलः च अचिरात् एव हंसरथसाहाय्येन अत्र उपस्थितौ भविष्यतः'' इति ।

नदीतटे यद्यत् प्रवृत्तं तत् न जानाति स्म मायासरोवरेश्वरः । अतः मकरकेतोः कथनस्य आशयः न अवगतः तेन । तथापि 'जलग्रहस्य आरोहणेन मम सुरक्षा तु भविष्यति एव' इति चिन्तयन् सः जलग्रहसमीपं गमनाय उद्युक्तः जातः ।

मकरकेतोः खड्गस्य प्रहारेण व्रणं प्राप्तवान् जलवृकराक्षसः वृक्षशाखाम् अवलम्ब्य उत्थाय दृढतया स्थितवान् । क्षणकालानन्तरं यथापूर्वम् उत्साहं प्राप्य सिद्धसाधकं पश्यन् सः अपृच्छत् – ''श्रीमन् ! इदानीं किं करणीयं मया ?'' इति ।

''भवता प्राप्तः व्रणः सामान्यः इति चिन्तयामि अहम् । अतः भवान् स्वखड्गं गृहीत्वा अग्रिमम् आदेशं प्रतीक्षताम्'' इति उक्त्वा मकरकेतुं पश्यन् सः अवदत् – ''इदानीं कस्मात् कस्य अपायः इति किम् अवगतं भवता ?'' इति ।

''वनदेवतया आहाररूपेण वयं प्रेषिताः स्मः इति चिन्तयन्ति एते वराकाः नरभक्षकाः । अतः अस्मान् ग्रहीतुम् उद्युक्ताः सन्ति ते । तस्मात् आदौ एतेभ्यः दुष्टेभ्यः आत्मा रक्षणीयः अस्ति अस्माभिः'' इति वदन् मकरकेतुः स्वखड्गं दृढतया गृहीतवान् ।

''मकरकेतो ! यावत् कनकाक्षमहाराजस्य पुत्रयोः अन्वेषणं न क्रियते, यावच्च तौ कनकाक्षमहाराजाय न समर्प्येते तावत्

अस्मासु कस्यापि अपायः न भवेत् इति इच्छति जयशीलः । अतः नरभक्षकैः क्रियमाणं ग्रहणं कथं वा सहेत सः ? अहम् एतान् विवेकं बोधयितुं प्रयत्नं करोमि । यदि अहम् असफलः स्यां तर्हि एतान् पङ्क्तिशः स्थापयित्वा निर्दयं मारयाम'' इति अवदत् सिद्धसाधकः क्रोधमिश्रितेन स्वरेण ।

तावता गणाचार्यः नेत्रे निमील्य शरीरम् इतस्ततः वलयन् उच्चस्वरेण - ''हे मातः, वनदेवते !' इति उक्त्वा सिद्धसाधकादीन् उद्दिश्य पुनः अवदत् - ''भो भोः, वन-देवतया आहाररूपेण प्रेषिताः अयि मानवाः ! वनदेवतामन्दिरं प्रति गच्छन्तु तावत् । तत्र भवतः सर्वान् देव्यै नैवेद्यरूपेण अर्पयित्वा खादिष्यामः वयम्'' इति ।

एतत् श्रुत्वा सिद्धसाधकः शूलम् उन्नीय अवदत् - ''अये नरमांसभक्षिणः ! मूर्खाः भवन्तः । भवताम् आहाररूपेण केनापि प्रेषिताः न वयम् । हंसरथात् पतितानाम् अस्मदीयानाम् अन्वेषणाय अत्र आगताः स्मः वयम् । एतस्मिन् कार्ये माया-सरोवरेश्वरः अस्माकं साहाय्यम् आचरन् अस्ति । वयम् अस्मदीयं कार्यं करिष्यामः । भवन्तः अपि स्वमार्गम् अनुसरन्तु'' इति ।

''एवं चेत् अस्माकं बुभुक्षायाः का वा कथा स्यात् ? वयं तु बहुभ्यः दिनेभ्यः बुभुक्षया पीड्यमानाः स्मः'' इति वदन् शूरसिंहः स्वस्य शूलं कम्पयन् सिद्ध-साधकस्य पुरतः आगत्य अतिष्ठत् ।

एतस्य प्रतिवचनं किमपि अवदन् सिद्धसाधकः हस्तसङ्केतं कृतवान् । तदा नरवानरः शूरसिंहं स्वस्य हस्ताभ्यां दृढतया गृहीत्वा उन्नीतवान् । एतत्समकाले एव जलग्रहः अपि स्वशुण्डाम् अग्रे प्रसार्य



गणाचार्य कटौ गृहीत्वा उन्नीतवान् । तदा शूरसिंहः गणाचार्यः च आक्रोशनं कुर्वन्तौ उच्चस्वरेण अनुचरान् आज्ञापितवन्तौ - ''भो भोः, शूलैः विच्छिद्य एतान् सर्वान् नाशयन्तु, बध्नन्तु वा'' इति ।

''जलवृक ! किं सहनया स्थित्या ? स्वस्य शिलागदया एतान् नरभक्षकान् सर्वान् चूर्णीकरोतु तावत्'' इति जलवृकराक्षसम् आदिष्टवान् सिद्धसाधकः ।

एतत् श्रुत्वा जलवृकराक्षसः - ''सिद्धसाधकमहाराजः जयतात् !'' इति जयघोषं कुर्वन् गदाम् उन्नीय नरभक्षकगणस्य उपरि अभिपतितवान् । सः स्वेच्छया स्वस्य गदां चालयन् तेषां मारणहोमम् आरब्धवान् । नरभक्षकाः शूलेन तं व्रणितं कर्तुं प्रयासं कृतवन्तः । किन्तु तत् सर्वथा उपेक्ष्य तान् गदया प्रहरति स्म जलवृकराक्षसः ।

जलवृकराक्षसः प्राणान् अपि पणीकृत्य युद्धं कुर्वन् आसीत् यत् तस्मात् नितरां सन्तुष्टः सिद्धसाधकः - ''साधु, जलवृक ! साधु ! भवान् पौरुषशाली धैर्यवान् च । भवतः साहाय्यार्थम् एषोऽहम् आगतः'' इति उक्त्वा स्वस्य आदेशेन नरवानरद्वारा शूरसिंहस्य क्षेपणं कारितवान् । ततः 'जय महाकाल !' इति उद्घोष्य शूलम् उन्नीय नरभक्षकाणां दिशि नरवानरं प्रेरितवान् ।

एतदभ्यन्तरे दश अश्वारोहिणः वेगेन आगत्य उच्चस्वरेण आज्ञां कृतवन्तः - ''अये, तूष्णीं तिष्ठन्तु । एषा कनकाक्षमहाराजस्य आज्ञा'' इति ।

एतत् श्रुत्वा सिद्धसाधकादयः नरभक्षकाः च युद्धप्रयत्नं परित्यज्य आश्चर्येण सैनिकान् पश्यन्तः स्थितवन्तः । 'कोऽपि अपायः उपस्थितः इव भाति' इति चिन्तितवान् मायासरोवरेश्वरः कम्पमानेन स्वरेण मकरकेतुम् अवदत् - ''मकरकेतो ! इदानीं मायासरोवरं प्रति गमनं वरं खलु ?'' इति ।

एतत् श्रुत्वा सिद्धसाधकः नेत्रे रक्तीकृत्य - ''अये दुष्ट, मायासरोवरेश्वर ! भवान् इदानीं पलायनं कर्तुं न अर्हति । यत् पलायनं भवान् हितकरं मन्यते तत् भवतः अहितम् एव करिष्यति । स्मरतु एतत्'' इति उक्त्वा तस्य वक्षः लक्ष्यीकृत्य स्वशूलं गृहीतवान् ।

- *(अनुवर्तते)*



वेताल-
कथा

# विद्यावान्

दृढव्रती त्रिविक्रमः पुनश्च वृक्षसमीपं गत्वा वृक्षात् शवम् अवतार्य स्कन्धे आरोप्य यथापूर्वं श्मशानस्य दिशि प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन्, भवतः साहसप्रवृत्तिः प्रशंसनीया । भवान् किमर्थम् एतादृशं परिश्रमं कुर्वन् अस्ति ? किमर्थं मध्यरात्रे भयङ्करजन्तुभिः युक्ते अरण्ये विपत्तिम् सम्मुखीकुर्वन् अस्ति ? भवन्तं जागरयितुम् एव मया बहूनां कथाः घटनाः च श्राविताः । किन्तु भवान् कस्माच्चिदपि विवेकं न प्राप्तवान् । अद्य अहं भवते गोविन्दस्य कथां श्रावयामि, यस्मिन् अनुशासनगुणः लेशमात्रेणापि न आसीत् । गुरूणां सेवां शुश्रूषां च कर्तुं या सहनाशक्तिः आवश्यकी सा



अपि तस्मिन् न आसीत् । किन्तु सः जन्मतः एव बुद्धिमान् प्रज्ञावान् च आसीत् । तथापि कापि समस्या सम्मुखीकरणीया चेत् सः भीतः भवति स्म, विलक्षणतया व्यवहरति स्म च । मम महत् भयम् अस्ति यत् भवान् अपि एतादृशं दोषं कुर्यात् कदाचित् इति । अहं तस्य कथां श्रावयामि । श्रद्धया शृणोतु'' इति ।

ततः वेतालेन कथा आरब्धा –

गङ्गातटे कपिलपुरनामके ग्रामे गोविन्द-नामकः बालकः वसति स्म । सः तीक्ष्ण-मतिः स्फूर्तिमान् च आसीत् । यां कामपि विद्यां सः कष्टेन विना अभ्यसितुं शक्नोति इति जनानां विश्वासः आसीत् । श्रान्तिं विना सः कतिपयक्रोशमितं दूरं धावन् गन्तुं शक्नोति स्म । तस्य लक्ष्यवेधित्वमपि निर्दुष्टम् आसीत् । जलप्रवाहमपि अवि-गणय्य तरणं कुर्वन् नद्याः अपरं तीरं गन्तुं शक्नोति स्म सः ।

कदाचित् ग्रामस्य केचन ज्येष्ठाः गोविन्दस्य पितरं सूचितवन्तः – ''एषः तीक्ष्णमतिः अस्ति । राजशेखरस्य समीपं प्रेष्यते चेत् एतस्य बुद्धिः तीक्ष्णतरा भवेत्'' इति ।

एतत् श्रुत्वा गोविन्दः पितरं पृष्टवान् – ''कः सः राजशेखरः नाम ?'' इति ।

तदा तस्य पिता – ''राजशेखरः सकलासु विद्यासु निष्णातः, महान् पण्डितः चापि । सर्वे वदन्ति यत् यः तस्मात् विद्याम् अध्यस्यति सः राजा भवितुं योग्यः भविष्यति इति'' इति उक्तवान् ।

तदा गोविन्दः अवज्ञया अवदत् – ''यदि तस्मिन् तावत् ज्ञानं, तावती पटुता च स्यात् तर्हि सः स्वयं किमर्थं राजा न अभवत् ?'' इति ।

तदा राजशेखरस्य पिता – ''प्रायः यदि सः इष्टवान् स्यात् तर्हि एतावता एव राजा अभविष्यत् । सः चिन्तयति यत् विद्यायाः दानम् एव मम धर्मः इति । अतः सः तं धर्मं निष्ठापूर्वकं निर्वहन् अस्ति । एतेन सह कालानुगुणं नूतनविषयाणाम् अध्ययने अपि सः सङ्कोचं न अनुभवति । सर्वेषां मतम् अस्ति यत् राजशेखरस्य तोलनं केनापि सह कर्तुं न शक्यते इति । भवान् अपि किञ्चित्कालं तस्य शिष्यः भूत्वा अध्ययनं करोति चेत् वरम्'' इति उक्तवान् ।

पितुः सूचना गोविन्दाय न अरोचत । ''कतिपयविद्यानां ज्ञानमेव किं जीवनस्य

लक्ष्यम् ? सुखेन जीवनं यापयितुं धनम् आवश्यकम् । आजीवनं विद्याग्रहणे मम रुचिः नास्ति'' इति उक्तवान् सः ।

तदा गोविन्दस्य पिता - ''यस्य अवगमनसामर्थ्यम् अस्ति सः आजीवनम् अध्ययने निरतः भवति चेत् कोऽपि दोषः नास्ति । भवति तादृशं सामर्थ्यम् अस्ति उत न इति भवान् एव निर्णयं करोतु'' इति उक्त्वा मौनम् आश्रितवान् ।

एतत् श्रुत्वा गोविन्दः आवेशग्रस्तः अभवत् । तस्य पौरुषं जागरितम् अभवत् । 'अहं कस्मिंश्चिदपि विषये राजशेखरात् अवरः नास्मि । एवं स्थिते मया किमर्थं राजशेखरस्य शिष्यत्वम् अङ्गीकरणीयम् ?' इति तस्य विचारः आसीत् ।

'राजशेखरेण अज्ञातां विद्याम् अहं जानामि चेदेव ग्रामजनाः मम महत्ताम् अवगच्छन्ति । अन्यथा न । अतः मया नूतना विद्या अन्वेष्टव्या' इति गोविन्दः निर्णीत-वान् । तेषु एव दिनेषु काचित् विचित्रा घटना प्रवृता ।

गोविन्दस्य ग्रामस्य सपीपे एव काचित् आम्रवाटिका आसीत् । आम्रवाटिकायाः मध्यभागे कश्चन वृक्षः आसीत् । सः आम्रवृक्षः इव दृश्यते स्म । किन्तु तस्य फलानि बदरफलानि इव लघ्वाकारकाणि । रुचिः तु कालवेल्लवत् तिक्तः । सः वृक्षः बहुकालतः तत्र आसीत् ।

एकदा गोविन्दः आम्रवाटिकां प्रविशन्तम् एकं वानरं दृष्टवान् । गोविन्दः तं वानरम् अनुसृतवान् । तस्य विचित्रवृक्षस्य समीपे आगमनसमये वानरः श्रान्त्या प्रोच्छ्वसन् आसीत् । सः वानरः तत्रैव स्थित्वा वृक्षतः एकं फलम् अवचित्य खादितवान् ।





अनुक्षणं सः द्विगुणितोत्साहेन कूर्दनं कुर्वन् उड्डीय कुत्रचित् अदृश्यः अभवत् । तावता वनपालकाः अपि तत्र आगताः । तत् दृश्यं दृष्ट्वा ते 'सः वानरः न । स्वयं हनुमान् एव अत्र आगतः आसीत्' इति भावयित्वा भक्त्या नेत्रे निमील्य प्रणामं कृतवन्तः ।

किन्तु गोविन्दः तथा न कृतवान् । सः चिन्तितवान् यत् तस्य वृक्षस्य फलेषु निश्चयेन कोऽपि महिमा अस्ति इति । अतः तिक्तं चेदपि सः तत् फलं खादितवान् । तदा विनूतनायाः शक्तेः प्राप्तिं सः अनुभूतवान् इव । किन्तु प्रयत्नेनापि सः डयनं कर्तुं न शक्तवान् । तथापि तस्य निराशता न अभवत् । सः पुनः पुनः प्रयत्नं कृतवान् । अन्ते श्रान्तः सन् प्रोच्छ्वासम् आरब्धवान् ।

गोविन्दः झटिति स्मृतवान् यत् वानरः यदा प्रोच्छ्वसिति स्म तदा फलं खादितवान्, अनन्तरं कूर्दनं कृत्वा कुत्रचित् अदृश्यः अभवत् इति । अनन्तरं सः वृक्षात् फलम् अवचित्य खादितवान् । अनुक्षणं तस्य शरीरे लाघवता दृष्टा । पुनश्च सः उड्डयनं कर्तुं प्रयत्नं कृतवान् । तदा सः किञ्चित्प्रमाणेन सफलतां प्राप्तवान् । इतःपूर्वं तेन एवम् उड्डयनं कूर्दनं वा न कृतम् आसीत् ।

गोविन्दस्य आनन्दस्य सीमा एव न आसीत् । वानरतः अपि अधिकदूरं कूर्दनस्य कला तेन अधिगता आसीत् । सः चिन्तितवान् – 'रामायणकाले अपि हनुमता अपि एतादृशं फलं खादितं स्यात् । अतः सः समुद्रोल्लङ्घनं कर्तुं शक्तवान्' इति ।

तदारभ्य सः ग्रामे स्वस्य विद्यायाः प्रदर्शनम् आरब्धवान् । सः आम्रवाटिकायाः फलस्य विषये कमपि न उक्तवान् । कूर्दन्तं डयमानं च तं दृष्ट्वा जनाः सन्तोषेण करताडनम् आरब्धवन्तः । ग्रामे सर्वत्र सः प्रसिद्धः जातः । तस्य प्रदर्शनं द्रष्टुं जनाः इतरग्रामेभ्यः अपि आगच्छन्ति स्म ।

एकदा गोविन्दः पितरम् उद्दिश्य – ''मया अल्पे एव समये महता यत्नेन एषः विषयः अधिगतः अस्ति । राजशेखरः एतां विद्यां न जानीयात्'' इति उक्तवान् ।

अथ एकदा कश्चित् वृद्धः तं ग्रामम् आगतवान् । सः गोविन्दस्य विषये विचारयति स्म ।

गोविन्दः तत्समीपं गत्वा स्वयं स्वस्य परिचयम् उक्त्वा – ''महाशय ! भवान् कः ?'' इति पृष्टवान् ।

सः वृद्धः – ''सर्वे मां राजशेखरः इति

वदन्ति । यां विद्यां भवान् प्रदर्शयन् अस्ति तद्विषये अहं श्रुतवान् अस्मि । भवतः शिष्यः भूत्वा तां विद्याम् अधिगन्तुम् आगतवान् अस्मि'' इति उक्तवान् ।

आश्चर्यचकितः गोविन्दः स्खलद्-वचोभिः - ''भवान् एव राजशेखरः ! भवान् सकलासु विद्यासु पारङ्गतः अस्ति इति श्रूयते । एवं स्थिते नूतनायाः विद्यायाः का आवश्यकता भवतः ? मया अज्ञाता विद्या कापि नास्ति इति अहङ्कारेण घोषयितुम् एव अत्र आगतवान् स्यात् भवान्'' इति उक्तवान् ।

तदा राजशेखरः - ''पुत्र । मयि अहङ्कारः यदि स्यात् तर्हि भवतः शिष्यत्वं स्वीकर्तुं न आगच्छेयम् एव । एवं ननु ?'' इति उक्तवान् ।

राजशेखरस्य उत्तरेण गोविन्दः सन्तुष्टः न अभवत् । सः - ''नूतनायाः विद्यायाः अधिग्रहणस्य का आवश्यकता अस्ति भवतः ? भवान् अपि एतादृशानि प्रदर्शनानि कृत्वा धनसम्पादनं कर्तुम् इच्छति किम् ?'' इति पृष्टवान् ।

तदा राजशेखरः - ''विद्यावतः धनस्य मोहः न भवति । न भवेत् अपि । मदर्थम् अहं विद्याः न ज्ञातवान् । ज्ञानम् अग्रिम-सन्तानाय दातुं सर्वविद्यानाम् एकं ग्रन्थं रचयन् अस्मि । तदर्थं भवत्तः विद्यां ग्रहीतुम् आगतः अहम्'' इति उक्तवान् ।

''महोदय ! मया ज्ञाता विद्या मया सह एव समाप्तिं गच्छति चेत् का हानिः ?'' इति उपहासपूर्वकम् उक्तवान् गोविन्दः ।



तदा राजशेखरः - ''हानिः भवति मित्र । मत्स्यः जले तरति । सः भूमिं प्रति आगच्छति चेत् अस्वस्थः भूत्वा मृतः भवति । हिमालयस्थः भल्लूकः मरुस्थलम् आगच्छति चेत् क्षणमात्रम् अपि स्थातुं न शक्नोति । किन्तु मानवः तादृशः न । तेन जले तरणीयम् । वायौ डयनं करणीयम् । वातावरणस्य वैपरीत्यस्य सम्मुखीकरणं करणीयम् । सोढव्यम् । अतः एव भगवान् मनुष्याय बुद्धिं दत्तवान् अस्ति । भवतः विद्याम् एव किञ्चित् परिशीलयाम । एतया विद्यया मानवाः नदीं तरीतुं शक्नुवन्ति । अग्निज्वालाभिः ग्रस्ताः चेत् आत्मनः रक्षणं कर्तुं शक्नुवन्ति । सर्वाभ्यः विद्याभ्यः प्रयोजनानि सन्ति एव । विद्यां ग्रन्थरूपेण संरक्ष्य प्रचारकरणं सर्वस्य अपि विद्यावतः कर्तव्यम् अस्ति'' इति विस्तृतरूपेण

बोधितवान् ।

राजशेखरस्य वचनसमनन्तरमेव तं प्रणम्य गोविन्दः – ''आर्य ! मां क्षम्यतु कृपया । अहं भवता सह आगमिष्यामि । भवतः शिष्यः भूत्वा ज्ञानस्य वर्धनं करिष्यामि । विद्याभ्यासस्य अनन्तरं मया अधिगतां विद्यां भवते गुरुदक्षिणारूपेण अर्पयिष्यामि । मां शिष्यत्वेन अङ्गीकरोतु'' इति प्रार्थितवान् ।

वेतालः एवं कथां समाप्य त्रिविक्रमम् अवदत् – ''राजन्, गोविन्दः कस्यापि गुरोः शिष्यः न अभवत् । तेन गुरोः सेवा शुश्रूषा वा न कृता । एतेन विना एव सः स्वस्य प्रज्ञया, पटुतया, बुद्धिबलेन च काञ्चित् असाधारणीं विद्याम् अधिगतवान् । तादृशः सः राजशेखरस्य पुरतः किमर्थं नतमस्तकः अभवत् ? किम् एतत् अनुचितं न ? एतत् असङ्गतम् अनावश्यकम् अविवेकपूर्णं च इति किं न भाति ? या नूतना विद्या ज्ञाता तद्द्वारा राजशेखरतुल्यतां प्राप्तुम् अशक्ष्यत् खलु सः ? एतादृशं सुवर्णावसरं हस्तच्युतं कृतवान् सः । किम् एतत् अविवेकपूर्णं न ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् – ''गोविन्दः अहङ्कारी इति विषयः पितरम् उद्दिश्य तेन उक्तैः उत्तरैः एव स्पष्टं प्रमाणितम् अस्ति । तस्य व्यवहारशैल्या अपि एषः अंशः स्पष्टः भवति एव । किन्तु स्वस्य प्रश्नानाम् उत्तरं राजशेखरमुखात् श्रुत्वा सः ज्ञातवान् यत् अहम् एकस्याम् एव विद्यायां पारङ्गतः अस्मि, तथापि अहं यावत् जानामि तदेव अधिकम् इति चिन्तयामि इति । राजशेखरः न तादृशः । सः विद्यावतां पण्डितानां च अपेक्षया श्रेष्ठस्तरे अस्ति । सः ज्ञानी योगी च । गोविन्दः एतत् सत्यम् अवगतवान् सम्भाषणावसरे । अतः एव सः क्षमां प्रार्थितवान् । एषः अंशः कदापि असाङ्गत्यम्, अनावश्यकताम्, अविवेकित्वं वा न द्योतयति'' इति ।

राज्ञः मौनभङ्गकरणे सफलः वेतालः शवसहिततया अदृश्यः भूत्वा पुनश्च वृक्षे लम्बमानः अतिष्ठत् ।



# वस्तुस्थितिः तु एषा

लक्ष्मीपतिः गौरीपतिः च प्रतिवेशिनौ । लक्ष्मीपतिः धनाढ्यः । जीवने धनचिन्ता कदापि न आसीत् तस्य । तदीयं जीवनं सुखमयम् आसीत् । किन्तु गौरीपतेः स्थितिः एतस्मात् सर्वथा भिन्ना । सः निर्धनः । तस्य परिवारः विशालः । सदा अस्वास्थ्यम् अपि भवति स्म तस्य । एवं सत्यपि सः प्रतिवर्षं स्वस्य जन्मदिनं वैभवेन आचरति स्म । बन्धुमित्रेभ्यः मधुरं ददाति स्म ।

एकदा यदा सः जन्मदिननिमित्तं मधुरवितरणम् आरब्धवान् तदा प्रतिवेशी रामशर्मा अवदत् - ''गौरीपते ! मां कश्चन सन्देहः बाधते । ताम् अहं पृच्छामि चेत् भवान् खिन्नः तु न भवेत् खलु ?'' इति ।

तदा गौरीपतिः अवदत् - ''भवता प्रश्ने कृते मम खेदः किमर्थं स्यात् ? निस्सङ्कोचं पृच्छतु तावत्'' इति ।

''भवतः प्रतिवेशी लक्ष्मीपतिः स्वस्थः धनाढ्यः चापि । किन्तु तेन स्वजन्मदिनाचरणं कदापि न कृतम् । भवतः जीवनं तु सदा कष्टमयम् एव । तथापि प्रतिवर्षं भवान् जन्मदिनम् आचरति खलु ? किम् एतत् विचित्रम् !'' इति अवदत् रामशर्मा ।

तदा गौरिपतिः मन्दहासपूर्वकम् अवदत् - ''अत्र वैचित्र्यस्य न कापि प्रसक्तिः । यदा जन्मदिनम् आगच्छति तदा लक्ष्मीपतिः चिन्तयति यत् सुखमयस्य एतस्य जीवनस्य एकं वर्षं पुनरपि अतीतं खलु इति । तस्मात् सः खेदं प्राप्नोति । एवं खिन्नः सः जन्मदिनाचरणं न करोति । अहं तु न तथा । कष्टमयस्य जीवनस्य एकं वर्षम् अतीतं खलु इति मम सन्तोषः । एतं सन्तोषं सर्वैः सह संविभज्य अनुभवितुम् इच्छन् अहं जन्मदिनाचरणं करोमि । वस्तुस्थितिः अस्ति एषा'' इति ।



# चतुरः यात्रिकः

साधुबाबानामकः कश्चित् योगी स्वस्य पर्यटनसमये श्यामपुरनामके ग्रामे उषितवान् । सः सर्वदा यात्रानिरतः भवति स्म । प्रयाणसमये सः स्वस्य प्रसेवे एकं वस्त्रम्, एकं मृत्पात्रं च नयति स्म, न अन्यत् किमपि । सामान्याः जनाः तस्मै भोजनादिकं यच्छन्ति स्म । केचन अभिमानिनः धनम् अपि यच्छन्ति स्म । अतः तेन धनेन आवश्यकतायां सत्यां सः आहारं क्रेतुं शक्नोति स्म ।

तस्य साधोः यात्रास्थलं समीपं यदि स्यात् तर्हि द्वित्राः ग्रामीणाः अपि साधुना सह गच्छन्ति स्म । ''महापुरुषेण साधुबाबवर्येण सह तीर्थयात्राकरणं पुण्यकरं खलु ?'' इति ते भावयन्ति स्म । तेषां मार्गायासः यथा न भवेत् तथा साधुबाबः मार्गे रोचककथाः श्रावयति स्म । बहुषु स्थानेषु साधोः मित्राणि, हितैषिणः च आसन् । ते जनाः एतान् यात्रिकान् आहूय उत्तमं सात्त्विकं भोजनं दत्त्वा वासार्थम् उत्तमां व्यवस्थां कल्पयन्ति स्म ।

लालूसेठनामकः श्यामपुरस्य अत्यन्तधनिकः वणिक् । सः सामान्यवाणिज्येन सह कुसीदवाणिज्यम् अपि करोति स्म । तस्मिन् प्रदेशे एव तादृशः 'परमकृपणः' 'लोभी' अन्यः नासीत् । एकदा साधुबाबः द्वित्राणि दिनानि श्यामपुरे स्थित्वा पुरीं प्रति यात्रार्थं प्रस्थितवान् । पुरी भगवतः जगन्नाथस्य स्थानम् । इतरग्रामीणाभ्यां सह लालूसेठः अपि यात्रार्थं गन्तुम् उद्युक्तः । तदा साधुबाबः तम् उद्दिश्य - ''भवान् तु वृद्धः न खलु । एवं स्थिते तीर्थयात्रार्थं का त्वरा ?'' इति पृष्टवान् ।

तदा लालूसेठः - ''महात्मन्, अहं वृद्धः न स्याम् । किन्तु भवान् वृद्धः खलु । इदानीं



यदि भवता सह न आगच्छेयं तर्हि कदाचित् भवतः सहवासं न प्राप्नुयाम् अपि'' इति उक्तवान् ।

साधुबाबः अन्तर्दृष्ट्या इतरेषां मनः अवगन्तुं शक्नोति स्म । 'एषः वणिक् यात्रायां स्वलाभम् आर्जयितुम् इच्छति । 'व्ययं विना आहारस्य वसतेः च समस्या परिहृता भवति । न केवलं तावत्, ग्रामे अहं प्रभावी पुरुषः अस्मि इत्यतः तौ ग्रामीणौ गौरवेण मम वस्तूनां भारं वहतः' इति चिन्तयति' इति अवगतवान् सः साधुः ।

अतः सः तस्य वणिजः प्रयत्नस्य निवारणार्थं – ''पश्यतु लालुवर्य ! पुण्यक्षेत्राणां दर्शनमात्रेण कोऽपि लाभान्वितः न भवति । पुण्यक्षेत्राणां दर्शनं यः कर्तुम् इच्छति सः प्रापञ्चिकवासनाभ्यः मुक्तः भवेत् । यात्रासमये प्रापञ्चिकलाभालाभानां चिन्तां न कुर्यात् । तस्य मनः स्वच्छं चिन्तामुक्तं च स्यात्'' इति उक्तवान् ।

तदा सः वणिक् – ''साधुवर्य ! मम अनुपस्थितौ मम पत्नीपुत्राः कथं जीवनं निर्वोढुं शक्नुवन्ति इति मया द्रष्टव्यम् अस्ति । अतः मासं यावत् अहं गृहात् बहिः स्थातुम् इच्छामि'' इति मन्दहासपूर्वकम् उक्तवान् ।

तदा साधुः – ''एवम् ? तर्हि भवतः योजना बहुमुखयोजना । यात्रामात्रं न'' इति उक्तवान् । ततोऽप्यधिकं सः किमपि न उक्तवान् । पूर्वचिन्तनानुसारं लालूसेठः अपि प्रस्थितवान् । साधुना सह अन्यौ द्वौ ग्रामीणौ अपि आस्ताम् ।

तौ ग्रामीणौ वणिजः वस्तूनि वहतः स्म इति कारणतः सः वणिक् सुखेन चलति



स्म । यदा सः गणः विश्रान्त्यर्थं मन्दिरे, कस्यचित् गृहे वा तिष्ठति तदा सः वणिक् विपणिं प्रति गत्वा वस्तूनां मूल्यं विचार्य स्वस्य ग्रामस्य मूल्यैः सह तोलनं करोति स्म । मार्गे साधुः याः कथाः वदति स्म तासां विषये वणिजः अवधानं सर्वथा न भवति स्म ।

मध्याह्नसमयः सः । आकाशः मेघाच्छन्नः आसीत् । ते सर्वेऽपि पूर्णप्रवाहयुक्तायाः नद्याः तीरे गच्छन्तः आसन् । प्रायशः समीपस्थाः द्वित्राः ग्रामाः प्रवाहपीडिताः आसन् इति भाति, यतः बहूनि वस्तूनि महाप्रवाहकारणतः नद्यां प्लवन्ते स्म ।

तेषु एकं पश्यन् लालूसेठः – ''किं तत् ? कम्बलम् ?'' इति अङ्गुल्या निर्दिशन् आश्चर्यं प्रकटितवान् ।

तदा तयोः एकः ग्रामीणः – ''सत्यम्, तत्

कम्बलम् एव स्यात् । किन्तु मन्दप्रकाशः इत्यतः स्पष्टं वक्तुं न शक्यते'' इति उक्तवान् ।

साधुबाबः तान् उद्दिश्य – ''अन्धकारतः पूर्वम् अस्माभिः कश्चन ग्रामः प्राप्तव्यः । शीघ्रं गच्छाम'' इति उक्तवान् ।

तदा कुतूहलेन लालूसेठः – ''किञ्चित् तिष्ठतु । वयं तत् कम्बलं गृह्णीयाम'' इत्युक्त्वा तयोः एकं ग्रामीणम् उद्दिश्य – ''भवान् तरणं कृत्वा तत् कम्बलम् आकृष्य तीरम् आनेतुं शक्नोति किम् ?'' इति अपृच्छत् ।

तदा सः ग्रामीणः अवदत् – ''नैव श्रीमन्, अहम् उत्तमः तरणपटुः न । तत्रापि एतादृशे महाप्रवाहे न शक्नोमि एव'' इति ।

तदा लालूसेठः – ''यद्यपि मया बहुपूर्वं तरणं कृतम् आसीत्, तथापि अहं तरणं विस्मृतवान् तु नास्मि'' इति उक्त्वा युतकं निष्कासयितुम् उद्युक्तः ।

तदा साधुबाबः – ''महाशय, तत् कम्बलं न प्राप्तं चेत् कस्य का वा हानिः भवेत् ? भवान् तीर्थयात्रातः विमुखः इव दृश्यते । एतादृशान् विचारान् परित्यज्य भगवतः विषये चिन्तनं कर्तुं भवान् आगतवान् खलु ?'' इति वदन् यात्रोद्देशं स्मारितवान् ।

किन्तु लालूसेठः – ''मूल्यवत् तत् कम्बलं व्यर्थं प्रवाहेण सह गन्तुं त्यजामः चेत् मूर्खता एव'' इति उक्त्वा साधोः स्थगनात् पूर्वमेव जले कूर्दनं कृतवान् ।

द्वित्रवारं निमज्जनस्य अनन्तरं सः तत् कम्बलं ग्रहीतुं शक्तः अभवत् । किन्तु किञ्चित्कालानन्तरं कम्बलेन सह लालूसेठः अपि प्लवमानः अग्रे गच्छन् आसीत् ।

तत् दृश्यं दृष्ट्वा सः साधुः उच्चैः – ''किम् अभवत् ? कम्बलम् आनेतुं यदि भवान् न शक्नोति तर्हि तत् तत्रैव परित्यज्य आगच्छतु'' इति उक्तवान् ।

तदा गद्गदस्वरेण लालूसेठः – ''अहं तदा एव कम्बलं त्यक्तवान् । किन्तु कम्बलं मां न त्यजति'' इति उक्तवान् ।

तदनन्तरं किमपि न श्रुतम् । अनन्तरं स्पष्टं जातं यत् कम्बलम् इति यत् चिन्तितम् आसीत् तत् कम्बलं न, प्रत्युत भल्लूकः इति । कथञ्चित् सः भल्लूकः नद्यां पतितवान् आसीत् । प्रवाहेण सह अग्रे गच्छतः तस्य ग्रहणार्थं यदा लालूसेठः लब्धः तदा सः तं न त्यक्तवान् एव ।








## पञ्चाङ्गस्य जन्मस्थानम्

देहलीसमीपस्थं 'जन्तरमन्तर्' एकं प्रसिद्धं स्थानम् । किन्तु मूलं जन्तर्-मन्तर् जयपुरे अस्ति, यच्च २५० वर्षेभ्यः पूर्वं राज्ञा सवायिजयसिंहवर्येण निर्मितम् । एषा वेधशाला काचित् । नक्षत्रग्रहादीनां चलनम् यत् आकाशे जायते तेषां विषये सुस्पष्टं विवरणं यच्छन्ति अत्रत्यानि विविधानि शिलानिर्मितानि साधनानि । एतस्मिन् वेधशालास्थाने अद्यापि प्रतिवर्षं भारतीय-पञ्चाङ्गनिर्मातॄणां ज्योतिषिकाणां प्रातिवार्षिकं सम्मेलनं प्रवर्तते । पञ्चाङ्गनिर्माणाय अत्रत्यनि साधनानि उपयुञ्जते ते पञ्चाङ्गनिर्मातारः ।

## सर्वत्र भुशुण्डिकानयनाय अनुमतिः

भारते यदि कोऽपि भुशुण्डिकां सर्वत्र नेतुम् इच्छति तर्हि तेन सर्वकारीयम् अनुज्ञापत्रं (लैसेन्स्) प्राप्तव्यम् । किन्तु कर्णाटकस्थैः कोडगुजनपदीयैः कूर्गजनैः एतादृशं करणीयं नास्ति । आंग्लशासनकाले कूर्गजनाः आंग्लेभ्यः भीताः भवन्ति स्म । अतः स्थानीयः संस्थानाधीशः तेभ्यः सर्वेभ्यः सर्वत्र भुशुण्डिकानयनाय तदा अनुज्ञां दत्तवान् । तदेव आनुकूल्यसुखम् अद्यापि अनुभवन्तः सन्ति तत्रत्याः । भारतसेनायाः प्रमुखाः केचन कोडगुप्रदेशीयाः । तेषु प्रमुखाः - फील्ड् मार्षल् के. एम्. कारियप्पः, जनरल् तिम्मय्यः इत्यादयः । कारियप्पः फील्डमार्षल्पदं प्राप्तवान् प्रथमः भारतीयः ।






# मातापुत्रसम्बन्धः

विजयः द्विवर्षीयः यदा आसीत् तदा एव तदीयः पिता दिवङ्गतः । ततः आरभ्य माता सरस्वती एव तं पोषितवती । यदा सः पञ्चवर्षीयः जातः तदा सा तं विष्णुशर्मणः गुरुकुलं प्रति प्रेषितवती । तत्र पञ्च वर्षाणि तेन शिक्षणं प्राप्तम् । तदभ्यन्तरे शिक्षणे अनासक्तिं प्राप्य सः मातरम् अवदत् - ''अम्ब ! भवती निरन्तरं परिश्रमं करोति, अहं तु विद्याभ्यासव्याजेन सुखेन अस्मि । एतत् उचितं न । अतः अहम् अपि भवती इव कार्यं करिष्यामि, यथाशक्ति धनं सम्पादयिष्यामि च'' इति ।

तदा सरस्वती उक्तवती - ''वत्स ! विद्याग्रहणाय युक्तं वयः एतत् । विष्णुशर्मवर्यस्य अध्यापनं भवते न रोचते चेत् भवान् व्यावसायिकविद्यायाः ग्रहणे प्रयासं करोतु । अल्पे एव वयसि धनसम्पादनचिन्ता न करणीया भवता'' इति ।

विजयः मातुः उपदेशम् अङ्गीकृतवान् । वृत्तिनिपुणानां सकाशात् वृत्तिशिक्षणग्रहणम् आरब्धवान् । पञ्चवर्षाभ्यन्तरे वृत्तिशिक्षणे उत्तमा एव प्रगतिः साधिता तेन । तस्य बुद्धिमत्तां श्रद्धां च दृष्ट्वा कश्चन शिल्पी तम् अवदत् - ''इतः अनतिदूरे स्थिते ग्रामे मम मित्रं निवसति । सः महाशिल्पी । तस्य शिल्पालये भवान् यदि शिल्पशास्त्रस्य अध्ययनं कुर्यात् तर्हि महान् शिल्पी भवेत् । प्रभूतां ख्यातिं धनं चापि सम्पादयेत्'' इति ।

विजयः एतं विषयं मातरं निवेद्य अवदत् - ''अम्ब ! प्रगतेः साधनाय एषः उत्तमः अवकाशः । किन्तु यदि अहम् एतदर्थम् अन्यत्र गच्छेयं तर्हि भवती अत्र एकाकिनी भवेत् । एतत् अहं न इच्छामि'' इति ।

तदा सरस्वती पुत्रं बोधितवती - ''भवता सह वासम् अहम् अपि इच्छामि । भवान् समर्थः अस्ति । कौशलम् अस्ति चेत्

अवकाशाः स्वयं प्राप्यन्ते । अतः भवान् ग्रामत्यागविचारं परित्यजतु'' इति ।

विजयः मातुः एतत् वचनम् अङ्गीकृतवान् । यत् वृत्तिशिक्षणं प्राप्तं तस्य उपयोगेन सः महान्तं परिश्रमं कुर्वन् दक्षतां प्राप्तवान् ।

अथ कदाचित् धनवर्मा नाम वणिक् तं ग्रामम् आगतः । कदाचित् विजयेन मिलितः सः वार्तालापात् विजयविषये समग्रं विवरणं प्राप्तवान् । सः विजयम् अवदत् - ''वत्स ! भवान् बुद्धिमान् समर्थः च । भवादृशस्यैव अन्वेषणं कुर्वन् आसम् अहम् । मम पुत्री स्वर्णमुखी भवता परिणेतव्या इति मम इच्छा । सा परिणीता चेत् मम सम्पतेः उत्तराधिकारी भविष्यति भवान्'' इति ।



धनवर्मणः प्रस्तावः विजये आश्चर्यम् आसक्तिं च अजनयत् । सः अचिन्तयत् - 'यदि एतस्य वचनम् अहम् अङ्गीकुर्यां तर्हि अपारायाः सम्पत्तेः स्वामी भवेयं, सुखजीवनं च कुर्याम्' इति । अतः सः धनवर्मणा सह तदीयं ग्रामं गतवान् । तस्य पुत्री दृष्टा तेन । तस्याः दर्शनात् तदीयं मुखं विच्छायं जातम् । यतः सा आसीत् नितरां कुरूपिणी । किन्तु एतत् तु सत्यं यत् धनवर्मणः सम्पतिः तु अपारा एव ।

''मम पुत्र्याः विवाहः भवतः सम्मतः चेत् अचिरात् एव अहं मुहूर्तं निश्चेष्यामि'' इति अवदत् धनवर्मा ।

तदा विजयः स्खलद्वचनैः अवदत् - ''आर्य ! आ बाल्यात् माता एव मां पोषितवती । अहं तस्याः वचनं कदापि न तिरस्करोमि । अतः एतद्विषये तस्याः आशयः मया ज्ञातव्यः । तदनन्तरम् एव अहं किमपि उत्तरं दातुं शक्नुयाम्'' इति ।

''वत्स ! यदि भवान् मम पुत्रीं परिणयेत् तर्हि भवतः माता अत्रैव वासं कर्तुम् अर्हेत् । वयमपि ताम् आदरेण द्रक्ष्यामः । एतत् भवान् मातरं वदतु'' इति अवदत् धनवर्मा ।

ग्रामं प्रत्यागतः विजयः मातरं सर्वं निवेद्य अवदत् - ''अम्ब ! धनवर्मणः पुत्री नितरां कुरूपिणी । तथापि ताम् अहं परिणेष्यामि । यतः विवाहानन्तरं तत्र सर्वे भवतीम् आदरेण द्रक्ष्यन्ति । यदि भवती एतत् निराकुर्यात् तर्हि महान् खेदः भवेत् मम'' इति ।

एतत् श्रुत्वा स्वनिर्णयं श्रावितवती सरस्वती - ''यथा इच्छा तथा कर्तुं स्वतन्त्रः भवान् । किन्तु एषः विवाहः मम सम्मतः न । मम महती इच्छा यत् मदीया स्नुषा



सुन्दरी सुशीला च स्यात् इति'' इति ।

एतदनन्तरं मासाभ्यन्तरे विजयराधयोः विवाहः निश्चितः । राधा आकर्षकरूप-युक्ता । तस्याः सौन्दर्यं दृष्ट्वा विजयः नितरां व्यामुग्धः । किन्तु सा सामान्यपरिवारे जाता । तस्याः पिता वरदक्षिणादाने असमर्थः । एषा परिणेतव्या उत न इति तेन यदा चिन्तनम् आरब्धं तदा माता तं बोधयित्वा तयोः विवाहं निर्वर्तितवती एव ।

कानिचन दिनानि सुखेन गतानि । राधा पितुः गृहतः धनं तु न आनीतवती, किन्तु धनव्यामोहः तस्याः विशेषतः आसीत् । कौशेयशाटिका दापनीया, आभरणानि कारणीयानि इत्येवं प्रतिदिनं पतिं पीडयति स्म सा । विजयः एतत् सोढुं न शक्तः । सः मातरम् अवदत् - ''धनिककुलस्य कन्यां परणेतुम् अहं यदा सज्जः आसं तदा भवती निराकृतिं दर्शितवती । एतस्याः परिणय-विषये भवती अनुरोधं कृतवती । किन्तु एषा तु प्रतिदिनं मां पीडयति । इदानीं किं करणीयं मया ? भवती एव वदतु'' इति ।

सरस्वती राधया सह एतद्विषये वार्तालापं कृतवती । तदा राधा उक्तवती - ''मानवे कदापि अकर्मण्यता न भवेत् । भवत्याः पुत्रः बहुविधाः वृत्तीः जानाति, सामर्थ्यवान् अपि अस्ति । नगरं गतं चेत् कोऽपि उद्योगः प्राप्येत एव, धनम् अपि सम्पादितं भवेत् । तस्य विद्या, सामर्थ्यं च कार्योपयोगि भवेत् इति उद्देशेन एव अहं तं पीडयामि'' इति ।

राधायाः वचनं युक्तम् इति अमन्यत सरस्वती । अतः सा नगरं प्रति स्नुषापुत्रयोः गमनं प्रोत्साहितवती । तदा तौ उक्तवन्तौ यत् भवत्या अपि आवाभ्यां सह आगन्तव्यम् इति । सरस्वती एतत् निराकुर्वती उक्तवती - ''नगरं प्रति गमनस्य अनन्तरं भवन्तौ यदा धनसम्पादने समर्थौ भविष्यतः, यदा च भवन्तौ स्वलक्ष्यं साधयिष्यतः तदा अहं नगरम् आगमिष्यामि । ऋते भवद्भ्यां मम को वा अन्यः बन्धुः अस्ति ?'' इति ।

अनिच्छन् एव विजयः पत्न्या सह नगरं गतवान् । महता अन्वेषणेनापि तेन उद्योगः न प्राप्तः । राधा तस्य असामर्थ्यस्य निन्दनं कृतवती । तदा निराशः विजयः अवदत् - ''अस्तु, अहम् असमर्थः अस्मि इति अङ्गीकरोमि । भवती एव कमपि उपायं वदतु । तदनुगुणं व्यवहरिष्यामि'' इति ।

''अहं तु महिला अस्मि । मया कः

उपायः दर्श्येत ? यः पत्न्याः मार्गदर्शनम् अपेक्षते सः किं लक्ष्यं साधयेत् ? अतः ग्रामम् एव प्रतिगच्छाम तावत् । पत्न्याः मार्गदर्शनम् अपेक्षमाणः जनः मातुः आश्रये तिष्ठति चेदपि न कापि हानिः'' इति कटुभिः वचनैः पतिं निन्दितवती राधा ।

एतानि वचनानि अपि तस्मिन् पौरुषं न अजागरयन् । सः मातुः समीपं गन्तुं सिद्धः अभवत् । किन्तु अत्रान्तरे एव सः ज्वरग्रस्तः जातः । वैद्यः तं परीक्ष्य औषधानि दत्तवान् । तथापि विजयस्य ज्वरः तु न अपगतः ।

''वैद्यस्य वचने एव विश्वासः नास्ति भवतः । यत् रोचते तत् करोति भवान् । अतः न ज्ञायते, कदा भवान् स्वस्थः भवेत् इति । यावत् भवान् स्वस्थः न भविष्यति तावत् वयं ग्रामं प्रति गन्तुम् अपि न शक्नुयाम । सुदीर्घा यात्रा कथं कर्तुं शक्येत भवता ?'' इति कोपेन उक्तवती राधा ।

''वैद्यः ग्रामगमनं निषेधतु नाम, आवां तु गच्छाव । मातुः समीपे यदि अहं तिष्ठेयं तर्हि स्वस्थः भवेयम्'' इति अवदत् विजयः ।

राधा एतत् वचनं वैद्यम् उक्तवती । वैद्यः किञ्चित् विचिन्त्य अवदत् - ''मया दत्तम् औषधं तु उत्तमम् एव आसीत्, परिणाम-जनकं च आसीत् । तथापि तस्य परिणामः एतस्मिन् कोऽपि न जातः । एतस्य कारणम् अपि किमपि स्यादेव । तत् किम् इति माता एव जानाति । किन्तु एतादृश्यां स्थितौ ग्रामं प्रति एतस्य गमनं न वरम् । अतः माता एव अत्र आनीयेत चेत् वरम्'' इति ।

राधा वैद्यस्य कथनानुसारं सरस्वतीं नगरं



प्रति आनीतवती । मातुः दर्शनात् विजयस्य नेत्रे अश्रुपूर्णे जाते । सः अवदत् - ''अम्ब ! भवत्याः अनुपस्थित्या सर्वं रिक्तं भाति स्म । यदा अहं स्वस्थः भविष्यामि तदा भवत्या माषापूपः करणीयः । भवत्या निर्मितः सः खादनीयः इति मम महती इच्छा'' इति ।

सरस्वत्याः आगमनस्य चतुर्णां दिनानाम् अनन्तरं विजयस्य स्वास्थ्ये अल्पा प्रगतिः दृष्टा । तदा सरस्वती वैद्यम् उक्तवती - ''मम पुत्रः माषापूपं खादितुम् इच्छति । किम् अहं निर्माय दद्याम् ?'' इति ।

''इतोऽपि मासं यावत् तेन एतादृशानि न खादनीयानि'' इति अवदत् वैद्यः । वैद्यस्य वचनानि विजयेन अपि श्रुतानि ।

किन्तु सरस्वती वैद्यस्य वचनम् उपेक्ष्य माषापूपान् सज्जीकृतवती । एतत् दृष्ट्वा

विजयः अवदत् – ''किम् एतत् अम्ब ? वैद्येन उक्तं किं न स्मर्यते ? एते माषापूपाः किमर्थं कृताः ?'' इति ।

''सर्वम् अहं जानामि । विना प्रतिवचनं खादतु'' इति आदिष्टवती सरस्वती ।

विजयः माषापूपान् अखादत् सन्तोषेण । राधायाः आतङ्कः आसीत् यत् एतेन मम पत्युः स्वास्थ्यं पुनरपि विनष्टं स्यात् इति । किन्तु तथा तु न जातम् । सः अल्पे एव काले पूर्णरूपेण स्वस्थः जातः । एतत् दृष्ट्वा आश्चर्यं प्रकटयन्ती राधा अवदत् – ''अम्ब ! वैद्येन निषिद्धं चेदपि भवत्या पुत्राय माषापूपाः दत्ताः । तथापि एतस्य अस्वास्थ्यं तु अपगतम् एव । एतत् तु महते आश्चर्याय'' इति ।

एतत् श्रुत्वा सरस्वती हसन्ती अवदत् – ''मम पुत्रं सम्यक् एव जानामि अहम् । तस्य मनसि एकं भवति, वचसा अन्यत् एव प्रकाशयति सः । निन्दनं प्राप्तुम् अनिच्छन् सः मदाज्ञापालनम् अभिनयति । एतत् जानती अहं तस्य यत् प्रियं तत् अङ्गीकरोमि । अतः सः मम वचनस्य विरोधं कदापि न करोति । प्रियं कार्यं सन्तोषं ददाति । सन्तोषः एव परमौषधम्'' इति ।

एतत् श्रुतवत्या राधया विवेकः प्राप्तः । सा सरस्वत्याः पादौ स्पृशन्ती अवदत् – ''इदानीं मया स्वस्य अज्ञानं ज्ञातम् । तस्य सामर्थ्यं कौशलं च तदा एव सफलं भविष्यति यदा च अहं माता इव तस्य आदरं करिष्यामि, प्रेमवर्षणं च करिष्यामि । एतत् भवत्याः व्यवहारतः ज्ञातं मया'' इति ।

स्नुषायाः वचनं श्रुत्वा सन्तोषं प्राप्नुवती सरस्वती उक्तवती – ''पतिपत्न्योः मध्ये मनस्तापः यदा न भवति तदा सः परिवारः सुखी भवति । पतिपत्न्यौ परस्परपूरकौ, सममनस्कौ च स्याताम् । एतदर्थम् अन्यस्य बोधनं न आवश्यकम् । अनुभवात् प्राप्तः विवेकः एव उपयोगाय भवति । यत्र एषः विवेकः न भवति तत् गृहं नरकायते'' इति ।

मातुः पत्न्याः च प्रोत्साहनात् विजयस्य जीवने नूतनस्य अध्यायस्य आरम्भः जातः । अतः सः वृत्तिज्ञानबलेन अधिकधनसम्पादने समर्थः जातः । एतस्मात् तस्मिन् परिवारे सुखशान्त्यादयः स्थिराः जाताः ।







चन्दमामा प्रस्तुतीकरोति

# चरितं जगन्नाथस्य

– मनोजदास



# रथयात्रा श्रीजगन्नाथचरितं च

ओरिस्साराज्यस्य पुरीनगरम् आ बहोः कालात् 'श्रीक्षेत्रम्' (पुण्यतमं क्षेत्रम्) इति ख्यातम् । अत्रास्ति भगवतः जगन्नाथस्य प्रसिद्धं मन्दिरम् । अत्रत्या मूर्तिः श्रीकृष्णस्य अंशेन युक्ता अस्ति इति जनानां विश्वासः ।

जगन्नाथः इत्येतत् कृष्णस्य अपरं नाम । सः अत्र पूज्यते अग्रजेन बलभद्रेण, अनुजया सुभद्रया च सह ।

श्रीकृष्णः दानवाधिपतिं कंसं संहर्तुं मथुरातः गोकुलं यत् गतवान् तत् निमित्तीकृत्य अत्र प्रतिवर्षं रथयात्रा आचर्यते ।

रथयात्रावसरे त्रयाणाम् अपि (जगन्नाथ-बलभद्र-सुभद्राणां) मूर्तिः पार्थक्येन रथे उपवेश्यते । ततः सहस्रशः भक्ताः 'बारदण्डेन' सह एकं तात्कालिकस्थानं प्रति रथान् नयन्ति ।

भारतस्य विविधेभ्यः कोणेभ्यः, विदेशेभ्यः च आगताः दशसहस्राधिकाः जनाः एतस्यां रथयात्रायां भागं वहन्ति ।

मुख्या रथयात्रा तु पुर्यां प्रवर्तते । देशस्य अन्येषु भागेषु अपि जगन्नाथस्य रथयात्रा

प्रवर्तते तस्मिन् एव काले । देशस्य पश्चिमभागेषु स्थितेषु नगरेषु ये कृष्णभक्ताः वसन्ति ते महता उत्साहेन एतां रथयात्रां व्यवस्थापयन्ति ।

भगवतः जगन्नाथस्य कथा पुराणकालं स्मारयति । आसक्तिदायिनी अस्ति सा कथा । सा च एवम् अस्ति –

इन्द्रद्युम्नः कश्चन जनप्रियः राजा । प्रजानां विषये विशेषप्रीतिः आसीत् तस्य । सर्वैः राजभिः पूज्यते स्म सः । तस्य वैभवस्मारकाणि अनेकानि गीतानि श्रूयन्ते स्म । सः कलाभिमानी, पण्डितप्रियः, कलापोषकः चापि आसीत् । तस्य राज्ये सर्वेऽपि सुखेन सन्तोषेण च आसन् ।

एवं देशे सर्वविधसमृद्धिः अस्ति चेदपि काचित् अमूर्ता असन्तृप्तिः तं बाधते स्म । किं तेन अप्राप्यं किञ्चित् आसीत् ? किं पूरयितुम् अशक्या काचित् आशा आसीत् तस्य ?

न । एवं तर्हि अतृप्तेः कारणं किं वा स्यात् ? अल्पेन एव कालेन सः स्वस्य अतृप्तेः कारणं ज्ञातवान् स्वयमेव ।

'यत् सहस्रशः भक्तानां यात्रास्थलं भवितुम् अर्हेत् तादृशं किञ्चन उत्तमं देवमन्दिरं निर्मातव्यम्' इति अवगतवान् सः । देवालयस्य अभावः एव एतावत्पर्यन्तम् अमूर्तरूपेण तिष्ठन् तं बाधते स्म । एतदनन्तरं सा असन्तृप्तिपीडा अपगता ।

कस्मै देवाय अस्ति एषः देवालयः ? का मूर्तिः प्रतिष्ठापनीया तत्र ? एतस्य उत्तरस्य प्राप्त्यै तेन दीर्घकालं प्रतीक्षणीयं न अभवत् । तेन स्वप्ने कश्चन ध्वनिः श्रुतः – 'आलयस्य निर्माणं भवतु । योग्ये काले मूर्तिः स्वयं प्राप्यते भवता' इति ।



राजा इन्द्रद्युम्नः जागरितः जातः । तस्य मनसि स्वप्नवचनानि एव गुञ्जन्ति स्म । सः मन्त्रिणः आहूय मन्दिरनिर्माणनिर्णयं श्रावितवान् ।

पुरीनगरस्य समुद्रतीरे, निश्चिते मुहूर्ते, मन्दिरनिर्माणकार्यम् आरब्धम् । विशिष्टाः शिलाः सुदूरस्थेभ्यः प्रदेशेभ्यः समागताः । समुद्रमार्गेण आनीताः ताः शिलाः गजैः उह्यमानेन शकटेन मन्दिरनिर्माणस्थलं प्रति आनीताः । सहस्रशः शिल्पिनः कर्मकराः च अहोरात्रं कार्यम् आरब्धवन्तः । रूक्षाः शिलाः शिल्पिनां



कलाचातुर्यस्य कारणतः सुन्दरं रूपं प्राप्तवत्यः । सागरतीरे तरङ्गैः चुम्ब्यमानः मेघमण्डलस्पर्शी उन्नतः कश्चन आलयः सिद्धः जातः ।

वर्षाणि गतानि । मन्दिर-निर्माणकार्यं समाप्तम् । जनाः पृच्छन्ति स्म – ''कस्य मन्दिरम् एतत् ? मूर्तिः च कुत्र ?'' इति । किन्तु उत्तरं न आसीत् ।

कदाचित् इन्द्रद्युम्नः आलयं प्रविश्य गर्भगृहस्य पुरतः उपविश्य अश्रूणि स्त्रावयन् – ''देव ! केन रूपेण भवान् भक्तान् अनुग्रहीतुम् इच्छति इत्येव न जानीमः वयम् । तस्य ज्ञापनाय कालः इतोऽपि किं न प्राप्तः ? इतोऽपि कियत्कालं प्रतीक्षणीयम् अस्माभिः ? महता श्रमेण, महता व्ययेन च निर्मिते एतस्मिन् देवालये मूर्तिम् अपश्यन्तः जनाः किं मां न उपहसेयुः ?'' इति प्रार्थितवान् ।

रात्रौ राजा स्वप्ने काञ्चित् अशरीरवाणीं श्रुतवान्, या च पुरीतः अनतिदूरात् श्रूयते स्म – ''यस्य निमित्तं देवालयः निर्मितः तस्य मूर्तिः कुत्रापि निलीना अस्ति । सा च मूर्तिः कृष्णस्य । सा अन्वेषणं प्रतीक्षते'' इति ।

राजा अवगतवान् यत् कृष्णस्य लीलाः जगत्प्रसिद्धाः, सः भक्तैः सह क्रीडति, एषः च तस्य स्वभावः, अतः कृष्णस्य विग्रहः सुलभतया न प्राप्येत इति ।

'निर्मलहृदयः, विवेकी भक्तः एव तं कृष्णम् अन्वेष्टुम् अर्हति' इति निश्चित्य राजा चतुरः पण्डितान् एतदर्थं चित्वा तान् चतसृषु दिक्षु विग्रहस्य अन्वेषणार्थं प्रेषितवान् ।

तेषु चतुर्षु विद्यापतिः एव अल्पवयस्कः । सः पूर्वस्यां दिशि प्रस्थितः, किञ्चित् अग्रे गत्वा उत्तराभिमुखं गतवान् । तेन अग्रे महत् अरण्यं प्राप्तम् ।

वस्तुतः सः अरण्यमार्गं परिहर्तुम् अशक्ष्यत् । किन्तु सः व्यवहरन् आसीत् न स्वबुद्ध्या, अपि तु अदृश्यशक्तेः कारणतः । सः काले काले भगवन्तं प्रार्थयते स्म । तस्य विश्वासः आसीत् यत् एषा प्रार्थना एव मां योग्यं मार्गं दर्शयिष्यति इति ।

सः गहनम् अरण्यं प्रविष्टवान् । यथा यथा अग्रे गतं तथा तथा गहनता वर्धमाना आसीत् । अग्रे गमनेन तेन लघुः पर्वतः प्राप्तः । अहो, आश्चर्यम् ! सः पर्वतः सङ्गीतमयः इव दृश्यते स्म ! आनकस्य, वेणोः च नादः, गीतं करतालध्वनिः च श्रूयते स्म ततः ।

अचिरात् एव सः अवगतवान् यत् एतत् सङ्गीतं पर्वतस्य अपरस्मात् भागात् श्रूयते इति । सः पर्वतम् आरुह्य अपरस्मिन् पार्श्वे दृष्टिं प्रसारितवान् । पर्वतस्य उपत्यकायां कश्चन रमणीयः परिसरः दृष्टः तेन । तत्र काश्चन शबरयुवतयः गायन्त्यः नृत्यन्ति स्म ।

सुदूरचलनात् विद्यापतिः नितरां श्रान्तः आसीत् । वृक्षस्य शाखां गृहीत्वा स्थित्वा नृत्यं पश्यन् सङ्गीतं शृणोति स्म सः ।

तावता अनतिदूरे एव व्याघ्रगर्जनं श्रुतम् । दिग्भ्रान्तः विद्यापतिः परिवृत्य दृष्टवान् । कश्चन घोरः व्याघ्रः गर्जन् तस्य समीपम् आगच्छन् अस्ति ! विद्यापतिः न वृक्षाद्यारोहणे निपुणः । निरायुधः सः किङ्कर्तव्यतामूढः सन् तत्रैव स्थितवान् ।

तदा नृत्यन्तीषु कस्याश्चित् स्वरः श्रुतः – 'व्याघ्रराज !' इति । व्याघ्रः गमनं स्थगयित्वा क्षणकालं तत्रैव अतिष्ठत् ।

''व्याघ्रराज ! प्रत्यागच्छतु तावत्'' इति तया पुनः आदिष्टम् । एतम् आदेशं पालयन् व्याघ्रः अधः गत्वा आत्मानम् आहूतवत्याः स्त्रियाः पादयोः समीपे विनयेन उपाविशत् । सा युवतिः व्याघ्रस्य पृष्ठं प्रीत्या स्पृष्टवती । तत्रत्यासु एषा एव उन्नता सुन्दरी च आसीत् ।

श्रान्तः भीतः च विद्यापतिः तत्रैव मूर्च्छां प्राप्तवान् इव शयितवान् । उभे युवत्यौ तत्समीपं गत्वा कदलीपत्रेण मृदु वीजितवत्यौ । अपरा पत्रपुटेन जलम् आनीय मुखस्य उपरि सिक्तवती । एतस्मात् विद्यापतिः सचेतनतां प्राप्य मन्दं नेत्रे उद्घाटितवान् । एका युवतिः पानार्थं जलं दत्तवती ।



ताः स्वस्य स्वामिन्याः आदेशस्य अनुगुणम् एतत्सर्वं कृतवत्यः आसन् । सा स्वामिनी गुणेन सौन्दर्येण च अद्वितीया आसीत् । तस्याः नाम आसीत् ललिता इति ।

ललिता अपरिचितस्य समीपम् आगत्य जानुना उपविश्य – ''भवान् कः इति, कुतः आगमनं कुत्र गमनम् इति वा वयं न जानीमः । प्रायः अरण्ये मार्गभ्रष्टः सन्, कारणान्तरेण वा भवान् अत्र आगतः स्यात् । तदास्तां तावत् । एतादृश्याम् अवस्थायां स्थितं भवन्तम् एवम् एव प्रेषयितुं वयं न इच्छामः । मम पिता विश्वावसुः एतस्य अरण्यस्य अधिपतिः अस्ति । अतिथित्वेन भवन्तं प्राप्य नितरां सन्तोषम् अनुभवेत् सः'' इति अवदत् ।

विद्यापतिः तस्याः वचनं श्रुत्वा नितरां प्रभावितः सन् ताम् अनुसर्तुं सिद्धः जातः ।

ललिता अग्रे प्रस्थिता । सख्यः ताम् अनुसृतवत्यः । विद्यापतिः अपि ताम् अनुसृतवान् । ललिता एकां सखीं सूचितवती यत् अग्रे गत्वा अस्माकम् आगमनं सूचयतु इति । सा युवतिः वृक्षाणां मध्ये अदृश्या अभवत् ।

अल्पे एव काले शिलायाः उपरि उपविष्टः विश्वावसुः विद्यापतिना दृष्टः । गम्भीरवदनः सः विद्यापतिं नमस्कृतवान् । विद्यापतिः प्रत्यभिवादनं कृतवान् । ततः सः आत्मनः परिचयं निवेद्य – ''आतिथेयं भवन्तम् अहं निवेदयितुम् इच्छामि यत् अहं महाराजस्य इन्द्रद्युम्नस्य

कार्यस्य निमित्तम् आगतवान् अस्मि इति । मया स्वीकृतं कार्यं मम आतिथेयस्य अपि प्रियं भवेत् इति अहं विश्वसिमि'' इति उक्तवान् ।

विद्यापतिः श्रेष्ठः पण्डितः इति ज्ञातवतः विश्वावसोः महान् सन्तोषः जातः । सः विद्यापतिं प्रार्थितवान् यत् भवता अत्रैव कानिचन दिनानि स्थित्वा गहनः वेदान्तविचारः, तत्त्वशास्त्रं च बोधनीयम् इति ।

विद्यापतिः एतं प्रस्तावम् अङ्गीकृतवान् । तस्य मनः वदति स्म यत् मया अत्र दीर्घकालं यावत् स्थातव्यं भवेत् इति ।

किं विश्वावसोः अद्वितीयायां पुत्र्यां स्थितः अव्यक्तः अनुरागः एव एतादृशस्य चिन्तनस्य कारणम् आसीत् ? न । आरम्भकाले तत् कारणं न आसीत् । विद्यापतिः स्मृतिशक्तिबलात् एव वेदोपनिषदादीन् वदन् अर्थविवरणं यत् करोति स्म तत् श्रद्धया शृणुतः स्म राजा विश्वावसुः राजकुमारी ललिता च ।

ललिता विद्यापतौ विशेषादरं प्रकटयति स्म । एतत् विद्यापतिना अपि लक्षितम् एव । किन्तु सः जानाति स्म यत् अहं महोन्नतस्य कार्यस्य साधनार्थं प्रस्थितः इति । सः क्षणमात्रम् अपि तत् लक्ष्यं न विस्मरति । सदापि कर्तव्यं स्मरन् भगवद्ध्यानेन कालं यापयन् आसीत् सः ।

किन्तु एतादृशः अपि सः कानिचन दिनानि तत् लक्ष्यं विस्मृतवान् एव । सः तीव्रम् अस्वस्थः यदा जातः आसीत्, यदा च ललिता तस्य सेवां कृतवती, तदा एतत् प्रवृत्तम् । सः ज्वरतापम् अनुभूतवान्, किन्तु तत् तस्य सन्तोषाय अपि जातम् । यतः तत् ललितायाः सामीप्यस्य अनुरागस्य च कारणं जातम् ।

सः अवगतवान् यत् न केवलं ललिता, अपि तु अहम् अपि अनुरागयुक्तः अस्मि इति । अतः विश्वावसुः यदा ललितायाः परिणयविचारं तस्य पुरतः उपस्थापितवान् तदा सः सहर्षं तत् अङ्गीकृतवान् । ततः ललिताविद्यापत्योः विवाहः सवैभवं सम्पन्नः ।

दिनानि एवम् एव गतानि । तत्र वासतः विद्यापतिः सन्तुष्टः अस्ति, खिन्नः चापि । ललिता परिणीता इत्यतः सन्तोषः, यदर्थं प्रस्थितं तत् न सिद्धम् इत्यतः खेदः अपि ।

अत्रान्तरे विद्यापतिना लक्षितं यत् विश्वावसुः प्रतिदिनम् अपि प्रातः उत्थाय कुत्रापि गत्वा सूर्योदयानन्तरं प्रत्यागच्छति इति । वृष्टिः, शैत्यं, झञ्झावातः वा एतं व्यवहारं भञ्जयितुं न अर्हति स्म । विद्यापतिः विश्वावसोः एतं नियतव्यवहारं दृष्ट्वा आश्चर्यचकितः । 'एषः प्रतिदिनं कुत्र गत्वा आगच्छति' इति तेन न ज्ञातम् ।

यदा सः ललिताम् एतद्विषये पृष्टवान् तदा सा उक्तवती – ''भवतः अत्यासक्तेः आत्मीयतायाः च दर्शनस्य अनन्तरं किमपि गोपयितुं मम मनः न इच्छति । इतः समीपे काचित् गुहा अस्ति । तत्र काचित् देवमूर्तिः अस्ति । तं देवं पूजयितुं प्रतिदिनं गच्छति मम पिता । अस्माकं पूर्वजैः तन्नाम पितृपितामहादिभिः सर्वैः पूजितः अस्ति सः देवः'' इति ।

# नीलमाधवदेवालयः

नेत्रे वस्त्रेण बद्धे आस्ताम् इत्यतः अहं कुत्र नीयमानः अस्मि इति विद्यापतिः अवगन्तुं न शक्नोति स्म । अनन्तरं विश्वावसुः विद्यापतेः नेत्रयोः वस्त्रपट्टिकाम् अपसारितवान् । तदनुक्षणं विद्यापतिना नीलवर्णस्य प्रखरः प्रकाशः दृष्टः । तत्र वेणुवादकस्य कृष्णस्य सुन्दरः विग्रहः अपि तेन दृष्टः । अतः तत्रत्यस्य देवस्य नाम नीलमाधवः इति अभवत् । माधवः इति कृष्णस्य अपरं नाम । नीलमाधवस्य मन्दिरं पुर्याः जगन्नाथमन्दिरस्यैव लघुस्वरूपम् । एषः देवालयः महानद्याः तीरे कान्तिलोनामके पर्वतमये प्रदेशे अस्ति । एषः ग्रामः खण्डपारातः १५कि.मी. दूरे अस्ति । कान्तिलोग्रामः पित्तलस्य कांस्यवस्तूनां च निर्माणे प्रसिद्धः अस्ति । नीलमाधवमन्दिरे इतरैः उत्सवैः सह भौम-एकादशी-उत्सवः अपि महता वैभवेन आचर्यते । अस्मिन् उत्सवे भागं वोढुं सहस्रशः जनाः सम्मिलन्ति तत्र ।

"किं मया अपि सा मूर्तिः द्रष्टुं शक्या ?" इति सानुरागं पत्नीं पृष्टवान् विद्यापतिः ।
"मूर्तिरस्ति इति बाह्येन केनापि न ज्ञायेत इति अभिप्रैति मम पिता" इत्युक्तं ललितया ।
"किम् अहं परकीयः संवृत्तः ?" इति खेदेन पृष्टवान् विद्यापतिः ।
"न । सर्वथा न । भवन्तं नीत्वा देवः प्रदर्शनीयः इति पितरम् अद्यैव निवेदयिष्यामि" इति उक्तवती ललिता ।

तस्मिन् दिने ललिता पत्युः इच्छां पितरं निवेदितवती । विश्वावसुः पुत्रीं कोपेन दृष्टवान् । किन्तु किमपि न उक्तवान् ।



ललिता स्वपक्षं त्यक्तुम् अनिच्छन्ती पुनः पृष्टवती - "तात ! अहं भवतः अद्वितीयः सन्तानः अस्मि खलु ? भवदनन्तरं भगवतः पूजां कः करिष्यति ? विद्यापतिना एव खलु करणीयम् ? एवं स्थिते तस्मै देवं प्रदर्शयामः चेत् का वा हानिः ?" इति ।

पुत्र्याः अनुरोधः अङ्गीकरणीयः एव अभवत् विश्वावसुना । तथापि - 'यावत् पूजाधिकारः-योग्याय उत्तराधिकारिणे न

समर्प्यति तावत् गुहां प्रति गमनस्य मार्गः अन्यस्मै न दर्श्यते' इत्येतं नियमं भञ्जयितुं सः न इष्टवान् । अतः सः नेत्रबन्धनपुरस्सरं विद्यापतेः नयनम् अङ्गीकृतवान् ।

अनन्तरदिने विद्यापतेः नेत्रे वस्त्रपट्टिकया बद्धे । विद्यापतेः दक्षिणहस्तं गृहीत्वा गुहां प्रति प्रस्थितवान् विश्वावसुः । विद्यापतिः वामेन हस्तेन पूर्वम् एव सर्षपान् गृहीतवान् आसीत् । सः गच्छन् तान् सर्षपान् मार्गे पातयन् गतवान् ।

''इदानीम् आवां गुहासमीपम् आगतौ स्वः । शिरः अवनमय्य गुहां प्रविशतु'' इति उक्त्वा गुहां प्रविश्य विद्यापतेः नेत्रयोः बन्धनम् अपनीतवान् विश्वावसुः ।

विद्यापतिः नेत्रे उद्घाट्य दृष्टवान् । सर्वत्र अन्धकारः दृष्टः तेन । गुहायाः कोणे विद्यापतेः दृष्टिः पतिता । विश्वावसुः शिलामय्यां वेदिकायां पुष्पाणि अर्पयन् तेन दृष्टः ।

अकस्मात् गुहायां नीलः प्रकाशः उत्पन्नः । अपरस्मिन् क्षणे वेणुं वादयतः कृष्णस्य आकारः दृष्टः विद्यापतिना ।

सः आनन्देन आश्चर्येण च अप्रयत्नेन एव उक्तवान् - ''अहो !'' इति ।

''किं जातं वत्स ?'' इति विद्यापतिं पृष्टवान् विश्वावसुः । विद्यापतिः मन्दहासं प्रकटय्य मौनम् आश्रितवान् ।

तौ ततः प्रस्थितवन्तौ । गुहां प्रति आगमनसमये यथा तथैव प्रतिगमनसमये अपि नेत्रयोः बन्धनं कृतम् आसीत् विद्यापतेः ।

प्रत्यागतं पतिं कुतूहलेन पृष्टवती ललिता - ''गुहायां किं दृष्टम् ?'' इति ।

तदा विद्यापतिः उक्तवान् - ''विशिष्टं न किमपि । अन्धकारमय्यां गुहायां किं वा दृश्येत ?'' इति ।

गुहायाम् अलौकिकम् अपूर्वं च यत् दृश्यं दृष्टं तदपि पत्नीं न उक्तवान् सः । जीवने इतः पूर्वम् एतादृशं कार्यं न कृतम् आसीत् तेन । अतः ललितां प्रति अपि रहस्यस्य अकथनं नितरां कष्टकरम् आसीत् तस्य ।

यदि सः स्वलक्ष्यसाधने बद्धादरः तर्हि तेन सा मूर्तिः ततः नेतव्या एव आसीत् । तेन विश्वावसुललिताभ्यां यः विश्वासः स्थापितः तस्य द्रोहः कृतः भवति स्म । विश्वासद्रोहाचरणं नितराम् अप्रियं कार्यम् आसीत् तस्य ।

सः अचिन्तयत् - 'विश्वावसुः मयि विश्वासं न कृतवान् । यदि सः मयि विश्वसितवान् स्यात् तर्हि गुहां प्रति गमनागमनकाले नेत्रबन्धनं न अकरिष्यत् । अतः मम कार्यं विश्वासद्रोहः सर्वथा न' इति ।

चिन्ताकारणतः बह्व्यः निद्राहीनाः रात्र्यः यापिताः तेन । दिने अपि सदा अन्यमनस्कता तस्य । किन्तु केवलेन निरन्तरचिन्तनेन समस्यायाः परिहारः तु न भवति खलु ?







विद्यापतेः चिन्तायाः मूलं कारणं ज्ञातुं न शक्तवती ललिता । 'किम् एषः राजास्थान-लभ्यानि नागरिकाणि सुखसाधनानि स्मरन् स्यात् ?' इति सन्देहः ललितायाः । कदाचित् सा पतिम् एतद्विषये पृष्टवती अपि ।

''नागरिकाणि सुखसाधनानि अत्र न सन्ति इति तु अहं किञ्चिदपि न खिन्नः । अहं कुत्र गतः इति अजानन्तौ मम मातापितरौ चिन्ताक्रान्तौ स्याताम् । किं मया तौ न द्रष्टव्यौ ? भवती मया सह आगच्छतु इति वक्तुं मम धैर्यं नास्ति । भवती यदि मया सह आगच्छेत् तर्हि भवतीं प्राणसमां भावयतः भवत्याः पितुः का अवस्था स्यात् ? अन्यच्च यदि अहं मया सह भवतीं नयेयं तर्हि जनाः प्रायः भवतीम् आश्चर्येण पश्येयुः'' इति उक्तवान् विद्यापतिः ।

''यावत् भवतः प्रीतिः मयि भवति तावत् कस्मिंश्चित् अपि विषये नास्ति मम चिन्ता । किन्तु अहं गच्छामि चेत् वृद्धस्य मम पितुः का गतिः भवेत् ? किम् अहं तं त्यक्त्वा गन्तुम् अर्हेयम् ?'' इति विषादमिश्रितेन स्वरेण उक्तवती ललिता ।

''भवती पितरं त्यक्त्वा गन्तुं न अर्हति, न गन्तव्यम् अपि । यदि मम गमनाय भवती अनुज्ञां दद्यात् तर्हि अहम् अचिरात् एव प्रत्यागच्छेयम्'' इति उक्तवान् विद्यापतिः ।

''किमेतत् सत्यम् ? किं भवता प्रतिज्ञायते ?'' इति आतङ्केन पृष्टवती ललिता ।

''कोऽन्यः मार्गः अस्ति गमनात् ऋते ?'' इति असहायकतया उक्तवान् विद्यापतिः ।

विद्यापतेः एतत् वचनं ललितायाः नेत्राभ्याम् अश्रूणि अपातयत् ।

''अस्तु, भवान् गत्वा अचिरात् एव प्रत्यागच्छतु । मम श्वश्रूश्वशुरौ वदतु यत् तयोः आशीर्वादं प्राप्तुम् अहं नितरां समुत्सुका अस्मि इति'' इति उक्तवती ललिता ।

ललिता पत्युः इच्छां पितरं निवेदितवती । विश्वावसुः एतत् अनुमन्यमानः विद्यापतये बहूनि उपायनानि दातुम् इष्टवान् । किन्तु विद्यापतिः एतत् निराकुर्वन् उक्तवान् - ''एषः उपायनानां नयनार्थं न समयः । यदा ललितया सह गमिष्यामि तदा तानि अवश्यं नेष्यामि । इदानीं गत्वा मातापितरौ विवाहवार्तां निवेदयामि'' इति ।

''भवतु नाम'' इति वदन् विश्वावसुः अङ्गीकारं सूचितवान् । जामातुः प्रयाणार्थम् उत्तमस्य अश्वस्य व्यवस्थां कृतवान् सः । विश्वावसोः, अश्रुपूर्णायाः ललितायाः च अनुज्ञां प्राप्य ततः प्रस्थितः विद्यापतिः अचिरात् एव तयोः दृष्टिपथात् अदृश्यः अभवत् ।

पूर्वं विद्यापतिः गुहां प्रति गच्छन् यान् सर्षपान् पातितवान् आसीत् ते इदानीम् अङ्कुरिताः आसन् । अतः गुहागमनमार्गः स्फुटं दृश्यते स्म । विद्यापतिः विना क्लेशं गुहां प्राप्तवान् ।



गुहां प्राप्तवान् सः मनसि एव भगवन्तं क्षमां प्रार्थितवान् - 'देव ! अन्तरङ्गसाक्षितया अहं कार्यं कुर्वन् अस्मि । मया कोऽपि दोषः आचरितः चेत् कृपया अहं क्षन्तव्यः' इति ।

घण्टातः पूर्वं विश्वावसुः याम् अर्चितवान् आसीत् तां शिलामय्यां वेदिकायां स्थितां मूर्तिम् उन्नीय स्यूते स्थापयित्वा गुहातः बहिः आगत्य अश्वम् आरूढवान् सः ।

"हे भगवन् ! यत् करणीयम् आसीत् तत् मया कृतम् । महतः कार्यस्य साधनसमये कानिचन अप्रियाणि अपि कार्याणि करणीयानि भवन्ति । अतः अचिरात् एव अहं पुनरपि मनःशान्तिं प्राप्तुं शक्ष्यामि" इति विद्यापतिः स्वगतम् उक्तवान् ।

सूर्यास्तसमये तेन पुरीनगरी प्राप्ता । सः साक्षात् इन्द्रद्युम्नस्य प्रासादम् एव गतवान् ।

राजा महता सन्तोषेण आगत्य विद्यापतिं स्वागतीकुर्वन् अवदत् - "आगच्छतु । भवन्तं प्रतीक्षमाणः एव आसम् । यदर्थं गतः तत् सिद्धम् इति भवतः मुखम् एव कथयति । ह्यः रात्रौ दृष्टः स्वप्नः अपि असूचयत् यत् भवान् रिक्तहस्ततया न आगतः इति" इति ।

"महाराज ! यस्य निमित्तम् अहं गतः सा प्रतिमा मया आनीता इत्यत्र दृढः विश्वासः अस्ति मम । किन्तु ...." इति वचनम् अर्धे स्थगितवान् विद्यापतिः ।

"पण्डितवर्य ! निस्सङ्कोचं वदतु । अहं जानामि यत् महत् कार्यं विना विघ्नं, विना समस्यां वा न सिध्यति इति । वदतु, भवता का समस्या सम्मुखीकृता ? तस्याः परिहारार्थं सर्वविधान् अपि प्रयत्नान् करिष्यामः वयम्" इति उक्तवान् राजा ।

"प्रभो ! मम सङ्कटं परिहर्तुं प्रायः कोऽपि न शक्नोति, ऋते मत्तः" इति उक्तवान् विद्यापतिः । अनन्तरं सः प्रवृत्तं समग्रं निवेदितवान् अपि ।

"शान्तः भवतु विद्यापते ! एषा चिन्ता एतत्क्षणे एव भवता परित्यक्तव्या । देवालयनिर्माणार्थं महान् व्ययः कृतः मया । सुदूरात् बहवः शिल्पिनः समागत्य सेवाभावनया कार्यं कृत्वा मन्दिरं निर्मितवन्तः । लोककल्याणार्थम् एव अस्ति एतत् मन्दिरम् । लोक-कल्याणकार्ये कस्यचित् एकस्य द्वयोः वा खेदः यदि भवेत् तर्हि तत् गौणम् । अतः भवता

चिन्ता न करणीया । अन्यच्च, मया स्वप्ने दृष्टं यत् श्वः प्रातःकाले प्रकाशमानः कश्चन दारुखण्डः समुद्रेण तीरम् आनीयते, तदर्थं प्रतीक्षा करणीया इति । भवता आनीता मूर्तिः विष्णोः अंशेन युक्ता खलु ? तां मूर्तिं समुद्रतीरे प्राप्तेन दारुखण्डेन निर्मितायां मूर्तौ योजयित्वा आलये प्रतिष्ठापयिष्यामः । भवन्तं यः विश्वासेन दृष्टवान् सः महानुभावः अपि आगत्य तां मूर्तिं पश्यतु । एतेन सः निश्चयेन सन्तुष्टः भविष्यति । भवता कृतः दोषः तेन क्षालितः भविष्यति । अतः खेदः मास्तु भवतः'' इति सान्त्वयन् उक्तवान् राजा ।

एतस्मात् विद्यापतिः किञ्चिदिव समाहितः जातः ।

सूर्यास्तस्य घण्टातः पूर्वं राजा, मन्त्रिणः, विद्यापतिः च समुद्रतीरे उपस्थिताः अभवन् । जीवने ऐदम्प्राथम्येन सूर्योदयं पश्यन् इव राजा सूर्योदयम् एव प्रतीक्षमाणः स्थितवान् ।

ततः अल्पे एव काले सूर्यः उदितः । ''अहो, तत्र दृश्यते दारुखण्डः ! तरङ्गस्य उपरि प्लवमानं तं भवन्तः पश्यन्तः सन्ति खलु ?'' इति उद्वेगमिश्रितेन स्वरेण अवदत् राजा ।

तरङ्गाः यदा उद्गच्छन्ति स्म तदा सः दारुखण्डः दृष्टिगोचरः भवति स्म । तरङ्गाः यदा अधोमुखाः भवन्ति तदा सः अदृश्यः भवति स्म ।

राज्ञः आदेशस्य प्रतीक्षां कुर्वत्यः स्थिताः नौकाः राज्ञः सूचनां प्राप्य समुद्रे वेगेन धावितवत्यः । ताः नृत्यन्तं तं दारुखण्डं परितः स्थितवत्यः । तासु स्थिताः नाविकाः जले अवतीर्य तं दारुखण्डं तीरं प्रति आनेतुं प्रयासं कृतवन्तः ।

किन्तु सः दारुखण्डः किञ्चिदपि कम्पितः न जातः । एतत् दृष्ट्वा ते नाविकाः आश्चर्यचकिताः । ततः तरणकुशलाः केचन जले अवतीर्य तीरं प्रति तस्य नोदनाय प्रयासं कृतवन्तः । ते अपि विफलाः । सुदृढां रज्जुं समुद्रे क्षिप्त्वा तया बद्ध्वा बलशालिनः सैनिकाः तं दारुखण्डं तीरं प्रति आक्रष्टुं प्रयत्नं कृतवन्तः । तैः अपि सफलता न प्राप्ता ।

एतत्सर्वं दृष्टवतः राज्ञः मुखे चिन्तारेखाः उत्पन्नाः । मन्त्रिणः किङ्कर्तव्यतामूढाः जाताः । सैनिकाश्च आश्चर्यचकिताः । यद्यत् कर्तुं शक्येत तत्सर्वं कृतम् आसीत् तैः । तथापि सफलता तु न प्राप्ता आसीत् ।

रात्रिः जाता । कौमुदी प्रसृता । सैनिकाः नाविकाश्च तीरं प्रति दारुखण्डस्य आनयनाय प्रयत्नान् कुर्वन्तः एव सन्ति । किन्तु सफलतायाः आशा तु न दृश्यते ।

राजा अकस्मात् आदिष्टवान् - ''प्रयत्नं स्थगयन्तु'' इति । मन्त्रिणः राज्ञः आज्ञां प्रयत्नरतान् श्रावितवन्तः ।

''दारुखण्डः किमर्थं तीरं प्रति न आगच्छति इत्यस्य कारणं ज्ञातम् अस्ति मया'' इति अवदत् राजा ।

अनन्तरं सः विद्यापतिं पश्यन् अवदत् - ''एतां प्रतिमां यः प्रतिदिनं पूजयति स्म तस्य महानुभावस्य समीपं मां नयतु । सः स्पृशति चेदेव दारुखण्डः चलेत्'' इति ।

विद्यापतिः मार्गं प्रदर्शयन् अग्रे प्रस्थितवान् ।



महाराजः मङ्गलद्रव्यैः सह मन्त्रिप्रभृतिभिः प्रमुखैः च सह तम् अनुसृतवान् । ते अरण्यमार्गेण विश्वावसोः वसतिम् उद्दिश्य गतवन्तः । अनन्तरदिने मध्याह्नसमये ते विश्वावसोः वसतेः पार्श्वे स्थितं पर्वतं प्राप्तवन्तः ।

सामान्यतः विश्वावसोः वसतिः सदापि शान्ततायुक्ता भवति । अद्यापि तत्र शान्तता अस्ति । किन्तु एषा न सहजा, अपि तु विलक्षणा । विषादच्छायायुक्ता अस्ति सा ।

प्रतिदिनम् इव सूर्योदयात् पूर्वं गुहां गतः विश्वावसुः अल्पे एव काले प्रत्यागत्य - ''वत्से ! भवत्या पतिः महत् अकार्यं कृतवान्'' इति वदन् दुःखावेगेन अधः पतितवान् ।

किं प्रवृत्तम् स्यात् इति तर्कितवती ललिता । 'परम्परया पूजितः देवविग्रहः विद्यापतिना चौर्येण नीतः स्यात् । अतः एव मम पितुः एतादृशी गतिः आगता' इति ज्ञातवती सा ।

'विद्यापतिः यद्यपि मयि दृढानुरागवान् आसीत् तथापि सः अरण्ये यत् स्थितवान् तस्य कारणं मद्विषयकः अनुरागः एव न आसीत् । सः अन्यत् किमपि विशिष्टं लक्ष्यं मनसि निधाय अत्र स्थितवान् आसीत्' इति चिन्तितवती सा ।

ललितायाः भविष्यं चिन्तयन् विश्वावसुः चिन्ताकुलः आसीत् । सा यस्मिन् महान्तम् अनुरागं स्थापितवती आसीत् सः विग्रहं चोरयित्वा पलायितवान् आसीत् ।

मध्याह्नः अतीतः । सायङ्कालः च गतः । रात्रिः अपि आगता । तथापि विश्वावसुः ललिता वा न नेत्रे निमीलितवन्तौ, न वा आहारं सेवितवन्तौ । अनन्तरदिने उषःकाले विश्वावसुः मन्दम् उत्थाय गुहां प्रति प्रस्थितवान् । ललिता, अन्ये बान्धवाः च तम् अनुसृतवन्तः । गुहां गतः विश्वावसुः मूर्तेः शिलापीठम् आलिङ्ग्य उच्चैः रोदनं करोति । यावत् निवेदितं चेदपि न उत्तिष्ठति । अन्ये किङ्कर्तव्यतामूढाः सन्तः मौनेन स्थितवन्तः ।

मध्याह्नसमये कश्चन युवकः धावन् आगत्य विश्वावसुं निवेदितवान् - ''पर्वतशिखरे केचन अज्ञातपूर्वाः दृष्टाः । तेषां नायकरूपेण स्थितः महाराजः इव एव भाति'' इति ।

किञ्चित्कालानन्तरम् अपरः कश्चित् आगत्य निवेदितवान् - ''विद्यापतिः एव मार्गं प्रदर्शयन् तान् आनयन् अस्ति'' इति ।

एतावता सर्वे अवगतवन्तः आसन् यत् विश्वावसोः विषादस्य कारणं किम् इति ।

''ते अस्माकं दिव्यमूर्तिं चौर्येण नीतवन्तः । किम् एतावता अपि ते न तृप्ताः ? किं ते अस्मान् पराजेतुम् इच्छन्ति ? भवतु । वयं तान् धैर्येण सम्मुखीकरवाम'' इति उक्तवन्तः केचन भुजम् आस्फालयन्तः ।

किन्तु अचिरात् एव तैः



ज्ञातं यत् तेषु कस्यापि हस्ते आयुधं किमपि नास्ति इति । राजा स्वयं वार्तां प्रेषितवान् यत् अहं विश्वावसोः अभिनन्दनाय आगच्छन् अस्मि इति ।

विश्वावसुः मुखेन विषादभारं वहन् एव राज्ञः स्वागताय गुहायाः पुरतः आगतवान् । राजा तं दूरात् एव दृष्ट्वा हस्तौ प्रसार्य वेगेन अग्रे आगत्य प्रीत्या आलिङ्गितवान् ।

अश्रूणि स्त्रावयन् सः विश्वावसुम् उक्तवान् – ''महात्मन् ! विश्वावसुवर्य ! वस्तुतः विग्रहचोरः अहं, न तु भवतः जामाता विद्यापतिः । मां क्षाम्यतु भवान् । अहं किञ्चित् निवेदयितुम् इच्छामि । कृपया अवधार्यताम्'' इति ।

ततः सः आलयनिर्माणाय जातां प्रेरणां, पुरीतीरे कृतम् अपूर्वमन्दिरं, मन्दिरे प्रतिष्ठापनाय पुरीतः अनतिदूरे एव स्थिता मूर्तिः अन्वेषणेन प्राप्तव्या इत्येतं स्वप्नसन्देशं, विद्यापतिना कृतं कार्यं च विस्तरेण निवेद्य पुनः उक्तवान् – ''विश्वावसो ! अद्यावधि सः देवः भवद्वंशीयानां पूजां प्राप्नुवन् आसीत् । इतः परं सर्वेषां जनानां पूजा तेन स्वीकरणीया इति दैवेच्छा अस्ति । किन्तु भवता भवद्वंशीयैः च यद्रूपं दृष्टं तत् सर्वेषां दृष्टिगोचरं न भविष्यति । भवता पूजिता दिव्यमूर्तिः समुद्रात् प्राप्तस्य दारुखण्डस्य अन्तः समीचीनतया योजनीया इति अस्माकं सङ्कल्पः । भवतः साहाय्यं विना कार्यसिद्धिः न भविष्यति'' इति ।

विश्वावसुः सर्वं श्रद्धया श्रुतवान् । राजा यत् वदति तत्र असत्यांशः कोऽपि नास्ति इति सः अवगतवान् । अतः अङ्गीकारपूर्वकं शिरः चालयन् उक्तवान् – ''प्रभो ! भवता सह आगन्तुम् अहं सिद्धः'' इति । राजा परमसन्तोषं प्राप्य विश्वावसुं प्रीत्या आलिङ्गितवान् ।

''वत्से ! भवती पतिम् अन्यथा मा चिन्तयतु । महोन्नतस्य कार्यस्य निमित्तं तेन रहस्यं गोपितम् । अनौचित्यं तत्र किमपि अस्ति चेत् सः क्षन्तव्यः भवत्या'' इति नमस्कृतवतीं ललिताम् उक्तवान् राजा ।



''दैवकार्यार्थं मया सर्वं कृतम् । मां क्षन्तुम् अर्हति भवती । यथा पूर्वं मया उक्तं तथा अचिरात् एव भवतीं राजधानीं नेष्यामि । तावत् सहनया तिष्ठतु'' इति अश्रूणि स्त्रावयन्तीं पत्नीम् उक्तवान् विद्यापतिः ।

राजा, तत्परिवारजनाः, विश्वावसुः च यदा पुरीं प्राप्तवन्तः तदा सायङ्कालः आसन्नः आसीत् । ततः समुद्रं प्राप्य विश्वावसुः राजा च नौकाम् आरुह्य दारुखण्डसमीपं गतवन्तौ । यदा ताभ्यां दारुखण्डः किञ्चित् नुन्नः तदा सः तरङ्गैः सह तीरं प्रति गन्तुम् उद्युक्तः । अल्पे एव काले सः दारुखण्डः तीरम् आगतः । ततः महता सन्तोषेण सः दारुखण्डः राजप्रासादं प्रति नीतः ।

अनन्तरदिने राजा शिल्पिनः आहूय पृष्टवान् – "एतस्मिन् दारुखण्डे कीदृशी मूर्तिः निर्मिता चेत् वरं भवेत् ?" इति ।

तदा शिल्पिनः उक्तवन्तः – "वयं शिलासु देवदेवीनां मूर्तीः निर्मातुं शक्नुमः । किन्तु दारुखण्डे मूर्तिनिर्माणं न जानीमः । अज्ञाते विषये कथं वा मार्गम् उपदिशेम ?" इति ।

तस्मिन् एव समये तत्र कश्चन वृद्धः आगत्य – "महाराज ! भवता निर्मिते आलये बलभद्रसुभद्रासमेतस्य कृष्णस्य विग्रहः भवति चेत् वरं भवेत् । अहं तादृशं विग्रहं दारुखण्डेन निर्माय दातुं सिद्धः अस्मि । एतादृशी मूर्तिः अन्यत्र कुत्रापि नास्ति" इति ।

राजा एतत् अङ्गीकृतवान् । तदा सः वृद्धः पुनः अवदत् – "किन्तु कश्चन नियमः अस्ति मम । अहं दारुखण्डेन सह प्रकोष्ठं प्रविश्य द्वारपिधानं करिष्यामि । विग्रह-निर्माणकार्यस्य समाप्तेः अनन्तरम् अहम् एव द्वारम् उद्घाटयिष्यामि । एतन्मध्ये कोऽपि मां न आह्वयेत्" इति उक्तवान् ।

"एवं तर्हि भवतः आहारादीनां का व्यवस्था ?" इति पृष्टवान् राजा ।

"कार्यस्य समाप्तेः अनन्तरम् एव आहारस्य स्वीकारः" इति उक्तवान् वृद्धः ।

राजा एतत् अङ्गीकृतवान् । राजभवनस्य कश्चन प्रकोष्ठः तस्मै दत्तः । वृद्धः दारुखण्डेन सह प्रकोष्ठं प्रविश्य द्वारपिधानं कृतवान्, विग्रहनिर्माणकार्यम् आरब्धवान् च ।

बहिष्ठात् काष्ठच्छेदनशब्दः निरन्तरं श्रूयते स्म । राज्ञी गुण्डिचादेवी सदापि तं काष्ठच्छेदनशब्दम् आसक्त्या शृण्वती तिष्ठति स्म ।

कानिचन दिनानि अतीतानि । एकदा प्रकोष्ठात् शब्दः न श्रुतः । शिल्पिनः स्थितिविषये राज्ञी चिन्ताक्रान्ता जाता । अनन्तरदिने अपि शब्दः यदा न श्रुतः तदा उद्विग्ना सती सा द्वारम् उद्घाट्य अन्तः गतवती ।

श्रद्धया विग्रहकार्ये मग्नः शिल्पी राज्ञीं दृष्ट्वा कार्यं स्थगितवान्, क्षणमात्रेण अदृश्यः जातः च । विग्रहस्य परिष्कारकार्यम् इतोऽपि न समाप्तम् आसीत् । तावता एव कार्यं स्थगितम् । देवशिल्पी विश्वकर्मा एव वृद्धरूपेण आगतः आसीत् इति जनाः भावितवन्तः । राज्ञी स्वस्य दोषार्थं पश्चात्तापम् अनुभूतवती ।



किन्तु किं सः विग्रहः वस्तुतः अपि अपूर्णः ? तथा तु भासते । किन्तु जगन्नाथभक्ताः तु तस्मिन् अलौकिकं सौन्दर्यम्, दैवीयसान्निध्यं च पश्यन्ति ।

विश्वावसुः प्रायः जरासवरस्य वंशे जातः स्यात् । जरासवरः च कृष्णेन संहृतः आसीत् पूर्वम् । विश्वावसुना पूजिता मूर्तिः तु भगवतः कृष्णस्य अंशेन युक्ता आसीत् । सा च भगवदंशयुक्ता मूर्तिः काष्ठमूर्तेः अन्तः



निगूढतया स्थाप्यते । काले काले प्राचीनमूर्तितः निष्कास्य नूतनायां काष्ठमूर्तौ स्थाप्यते सा । एषा तत्रत्या परम्परा ।

विष्णोः याः मूर्तयः विविधेषु स्थलेषु पूज्यन्ते तासु श्रीजगन्नाथमूर्तिः अतिप्रमुखा । विश्वमान्या अस्ति सा मूर्तिः । तदावासभूता पुरी च आ बहोः कालात् पवित्रयात्रास्थलत्वेन परिगण्यमाना अस्ति ।

*बहुभ्यः शतकेभ्यः भगवतः जगन्नाथस्य विषये बह्व्यः कल्पितकथाः श्रूयन्ते । तासु एका रथयात्रासम्बद्धा । तस्यां कथायां पुर्याः राज्ञः विषयः अपि अस्ति ।*

होः कालात्पूर्वं कलिङ्गदेशस्य राजकुमारः पुरुषोत्तमदेवः देशाटनार्थं पुरीतः प्रस्थितः । बहून् ग्रामान् नगराणि च अतिक्रामन् सप्ताहान् यावत् यात्रां कृतवान् सः । अन्ते सः दक्षिणदेशस्थं प्राचीनं काञ्चिनगरं प्राप्तवान् । तत्रत्यः राजा सादरं तस्य स्वागतं कृतवान् ।

काञ्चिराजस्य एका पुत्री आसीत् । पद्मावती इति तस्याः नाम । तस्याः सौन्दर्येण व्यवहारेण च पुरुषोत्तमदेवः आकृष्टः अभवत् । सः तस्याः सहवासे कतिचन दिनानि स्थातुम् ऐच्छत् । किन्तु एतावता तेन वार्ता प्राप्ता यत् तदीयः पिता नितराम् अस्वस्थः अस्ति इति । अतः सः राजकुमारः त्वरया पुरीं प्रतिगतवान् ।

अल्पे एव काले वृद्धः राजा दिवङ्गतः । अनन्तरं राज्ञः अद्वितीयः सन्तानः पुरुषोत्तमदेवः उत्तराधिकारिरूपेण सिंहासनम् आरूढवान् । सः काञ्चिनगरं प्रति दूतद्वारा सन्देशं प्रेषितवान् यत् पद्मावतीम् अहं परिणेतुम् इच्छामि इति ।

सन्देशं पठित्वा काञ्चिराजः नितरां हृष्टः । अनुक्षणं सः अमात्येषु अन्यतमं पुरीं प्रति प्रेषितवान् । भगवतः जगन्नाथस्य रथयात्रायाः समयः आसीत् सः । प्राचीन-पराम्परायाः अनुसारं रथयात्रायाः मार्गं सम्मार्जन्या स्वच्छीकुर्वन्तं कलिङ्गराजं दृष्टवान् मन्त्री ।

दौर्भाग्यवशात् काञ्चिराजस्य अमात्याय एषा पद्धतिः न अरोचत । सः काञ्चिम् आगत्य – "सम्मार्जकाय राज्ञे राजकुमार्याः दानम् अगौरवकरम्" इति उक्तवान् । काञ्चिराजः अपि अमात्यस्य अभिप्रायम् अनुमोदितवान् ।

एषा वार्ता यदा पुरुषोत्तमदेवेन ज्ञाता तदा सः नितरां क्रुद्धः अभवत् । सः काञ्चिनगरम् आक्रान्तुम् इष्टवान् । किन्तु तस्मिन् युद्धे तेन घोरः पराजयः अङ्गीकरणीयः अभवत् । सः पुरीं प्रत्यागतवान् । देवानां पुरतः नतमस्तकः भूत्वा बहूनि दिनानि प्रार्थनां कृतवान् । पुनरेकवारं काञ्चिविषये प्रयत्नः भवतु इति अशरीरवाण्या सूचितम् ।

पुरुषोत्तमदेवेन सैन्यस्य पुनर्घटनं कृतम् । अनन्तरं सः काञ्चिनगरं प्रति प्रस्थितवान् ।

चिलिकासरोवरस्य तीरे काचित् वृद्धा पुरुषोत्तमदेवं स्थगितवती । सा वृद्धा पुरुषोत्तमदेवम् उद्दिश्य – ''पश्यतु महाशय ! केभ्यश्चित् दिनेभ्यः पूर्वं श्वेतकृष्ण-वर्णीयौ उभौ मत्तः दधि स्वीकृत्य पीतवन्तौ । यदा अहं धनं पृष्टवती तदा तौ मह्यम् एतत् अङ्गुलीयकं दत्त्वा – 'एतेन मार्गेण आगताय युवकाय एतत् अङ्गुलीयकं दर्शयति चेत् सः भवत्यै धनं दास्यति' इति उक्त्वा गतवन्तौ'' इति उक्तवती ।

राजा तत् अङ्गुलीयकम् अभिज्ञातवान् । तत् आसीत् भगवतः जगन्नाथस्य । अतः सः अवगतवान् यत् अत्र आगतौ अश्वारोहिणौ जगन्नाथ-बलभद्रौ एव, न तु अन्यौ इति ।

ततः पुरुषोत्तमदेवः काञ्चिनगरस्य युद्धे जयशाली अभवत् । काञ्चिराजः युद्धे बन्दी अभवत् । पुरुषोत्तमदेवः तम् आदरेण सत्कृत्य तस्य विमोचनं कारयित्वा वृद्धं सचिवम् आज्ञापितवान् – ''एतस्याः राजकुमार्याः निमित्तं सम्मार्जकं वरम् अन्विष्यतु'' इति ।

पुनश्च रथयात्रायाः समयः आगतः। राजा पुरुषोत्तमदेवः मार्गस्य सम्मार्जनार्थं स्वर्णमयीं सम्मार्जनीं गृहीत्वा आगतवान् । तदा कश्चन हस्तः आत्मीयतया महाराजस्य भुजम् अगृह्णात् । राजा मुखं परिवर्त्य दृष्टवान् । वृद्धः सचिवः तत्र मन्दहासं प्रकटयन् तिष्ठति ! अपरस्मिन् क्षणे सचिवस्य सूचनानुसारं काचित् अवगुण्ठनवती सुन्दरी अग्रे आगत्य तस्य कण्ठे मालाम् अर्पितवती ।

''महाप्रभो ! राजकुमार्याः पद्मावत्याः निमित्तं वररूपेण योग्यस्य



सम्मार्जकस्य अन्वेषणं करोतु इति भवान् माम् आदिष्टवान् आसीत् । इदानीं भवान् अपि सम्मार्जकः एव खलु ? पद्मावत्यै इतोऽपि उत्तमं सम्मार्जकम् अहं कुतः प्राप्नुयाम् ?'' इति हसन् अवदत् वृद्धः मन्त्री ।

एतत् श्रुत्वा राजा अप्रतिभः निरुत्तरः च जातः । ततः मन्त्रिणः आदेशस्य अनुगुणं सः पद्मावत्याः कण्ठे मालाम् अर्पितवान् । एतदनन्तरं पद्मावती कलिङ्गदेशस्य राज्ञी जाता ।

**ओरिस्साप्रवासोद्यमः (विशेषोत्सवानां विवरणम्) (जुलै-डिसेम्बर् २००३)**

| उत्सवस्य/पर्वणः नाम | दिनाङ्कः मासः च | प्रमुखम् आचरणस्य स्थलम् |
|---|---|---|
| स्नानयात्रा | १४ जून् | पुरी |
| रथयात्रा | १ जुलै | पुरी, केन्द्रपाडा, बरीपाडा |
| बहुधायात्रा | ९ जुलै | पुरी, केन्द्रपाडा, बरीपाडा |
| दुर्गापूजा | २-५ अक्टोबर् | कटक् |
| गजलक्ष्मीपूजा (कुमारपूर्णिमा) | ९ अक्टोबर् | धेङ्कनलनगरम् |
| अनलनवमी | २ नवम्बर् | सखीगोपाल् |
| बाडा ओशा | ७ नवम्बर् | धोवलेश्वरम् |
| बलियात्रा | ८ नवम्बर् | कटक्, परादीप्, कोणार्क्, बालुगावँ च |
| परब (आदिवासिनाम् उत्सवः) | ६-१८ नवम्बर् | कोरापुट् |
| बीच् फेस्टीवल् | २३-२७ नवम्बर् | पुरी |
| कोणार्कनृत्योत्सवः | १-५ डिसेम्बर् | कोणार्क् |

***पुरीनगरं प्रति गमनाय मार्गः*** *– जगन्नाथदेवालयार्थं रथयात्रार्थं च प्रसिद्धं पुरीनगरं भुवनेश्वरतः ६० कि.मि.दूरे, कोणार्कतः ३५ की.मी.दूरे च अस्ति । कोल्कत्ता, देहली, अहमदाबाद्, तिरुपतिः इत्यादिभ्यः साक्षात् धूमशकटमार्गाः सन्ति । वसतिसौकर्यार्थम् अधिकविवरणार्थं च ओरिस्सा-प्रवासोद्यमाभिवृद्धिसंस्था, (OTDC - Orissa Tourism Development Corporation) पान्थनिवासः इत्येतस्याः, पुरीप्रवासोद्यमकार्यालयस्य वा सम्पर्कः क्रियताम् ।*

# Touch Orissa to feel India

Culture



Flowing through the arteries of Orissa, is the living and continuing culture of India... its varied expressions and its rich variety. The very stones speak of the unique history of the nation. The temple-culture condenses the quintessence of India. Whether it is the sacred environs of Lord Jagannath temple, or the eroticism of Konark's Sun temple, the wondrous caves of Jainism or the mystical monasteries of Buddhism, the paintings of folklore or the weaver's magic... Orissa speaks eloquently of a living past and continuing present.The rhythmic and exotic classical 'Odissi dance' evolved from the cult of the 'devadasis' or female temple dancers reverberates not only within the portals of the nation, but also echoes on foreign shores too. Folk dances like the 'Chhow' or the 'Sambalpuri' dance and tribal dances like the 'Ghumura' & 'Paraja' can set any soul ablaze. Indigenous theatre in the form of 'Prahalad-Nataka' or the 'Dhanuyatra' are expressions of the 'Indianness of India'. Fairs like the *'Bali Jatra' remind us of our ancient maritime links with Bali.* And to crown it all is our universally-acclaimed 'Rathyatra' of Lord Jagannath which has infected the world. So... sure and true flows the Orissan culture reflecting the Indian Culture.




Visit Orissa - Experience India.

**Orissa**
The Soul of India

**For more information contact:** Director, Tourism; Paryatan Bhavan; Bhubaneswar-751014, Orissa, India Tel: (0674) 2432177, Fax: (0674) 2430887, e.mail:ortour@sancharnet.in, website:www.orissa-tourism.com Tourist Offices at; **Chennai:** Tamilnadu Tourism Complex, Ground Floor, Near Kalaivanar Arangam Wallajah Road, Chennai - 600002, Ph: (044) 25360891, **Kolkata:** Utkal Bhawan 55, Lenin Sarani, Pin-700013 Tel: (033) 22443653, **New Delhi:** Utkalika, B/4 Baba Kharak Singh Marg, Pin - 110001, Telefax (011) 23364580

# वार्ताविशेषः

## शुनकानां चिकित्साकेन्द्रम्

टोकियोनगरीयाः स्वगृहस्य शुनकानां भारवर्धनं यथा न स्यात् तथा जागरूकतां वहन्ति विशेषतः । काश्चन संस्थाः तादृशानां साहाय्याय उद्युक्ताः सन्ति चिकित्सा-केन्द्राणाम् आरम्भद्वारा । तत्र विशिष्टानि स्नानागाराणि, सञ्चारस्थलानि च भवन्ति । धावनस्थले धावनं कृत्वा ते शुनकाः विशिष्टे स्नानागारे बुद्बुदोपेतेन जलेन स्नान्ति । तादृशं स्नानं तेषाम् आरोग्यवर्धकं भवति । एतादृशस्य स्नानस्य अनन्तरं सुगन्धस्नानम् अपि भवति । तत्र चायपर्णानि सैप्रस्पर्णानि इत्यादीनि उपयुज्यन्ते । सत्यं खलु, तत्रत्यानां शुनकानां शुक्रदशा !

## द्वादशघण्टाभ्यन्तरे सिद्धं पुस्तकम्




एप्रिल्मासस्य २३ तमः दिनाङ्कः पुस्तक-दिनत्वेन आचर्यते जगति । वर्षेऽस्मिन् जर्मनीयया प्रकाशनसंस्थया नवेतिहासः एव सृष्टः । प्रातः ७.४५ समये तया ४० कृतिकारेभ्यः लेखनाय विषयः दत्तः । तत द्वादशघण्टाभ्यन्तरे, तन्नाम सायं ७.४५ वादनसमये तैः रचितं पुस्तकं दशसु नगरेषु विक्रयणाय उपलभ्यम् आसीत् । तन्नाम द्वादश-घण्टावधौ पुस्तकस्य रचनम्, अक्षरयोजनं, मुद्रणम् इत्यादिकं सर्वं समाप्तम् आसीत् । प्रस्तावनाम् अविहाय सर्वाणि पुस्तकानि शतपुटात्मकानि आसन् । स्टिफटङ्क् लेसेन् एतत् अपूर्वं कार्यं साधितवान् साहसी । जनेषु पठनप्रवृतेः वर्धनम् एव तस्य उद्देशः आसीत्, न तु जागतिकविक्रमसाधनम् ।

# मेघालयराज्यस्य जानपदकथा

मेघालयपदस्य अर्थः भवति - 'मेघानां पङ्क्तिः' इति । एतत् राज्यं प्राकृतिकसौन्दर्येण परिपूर्णम् अस्ति । हिमालयस्य उपत्यकायां स्थितम् एतत् राज्यं महत्याः वृष्टेः, महतः सूर्यतापस्य च आकरः अस्ति । उन्नताः जलपाताः, स्वच्छाः नद्यः, समृद्धाः समतलभूमयः च एतस्य राज्यस्य विशेषाः ।

मेघालयस्य उत्तरे पूर्वे च भागे असमराज्यम् अस्ति । दक्षिणे पश्चिमे च अस्ति बाङ्ग्लादेशः । एतत् राज्यं १९७२ तमवर्षस्य जनवरीमासस्य २१ तमे दिनाङ्के असमराज्यतः पृथग्भूय स्वतन्त्रं राज्यं जातम् ।

शिल्लाङ्ग् एतस्य राजधानी । तत् नगरं १९७२ तमवर्षपर्यन्तम् असमराज्यस्य राजधानी आसीत् । एतत् नगरं ग्रीष्मकालिकं विश्रान्तिस्थानम् आसीत् आङ्ग्लानाम् । एतत् समुद्रतलात् १४९६मीटरुन्नते स्थले अस्ति । औन्नत्यस्य कारणतः एतत् 'पूर्वदेशस्य स्काट्ल्याण्ड्' इति उच्यते ।

मेघालयस्य जनसंख्या २३,०६,०६९ मिता । एतस्य राज्यस्य विस्तारः अस्ति २२,००० चतुरस्रकिलोमीटर्मितः । अत्रत्याः प्रमुखाः भाषाः - खासी, गारो, इङ्ग्लीष् च । एताः एव भाषाः सर्वेषु शासकीयव्यवहारेषु उपयुज्यन्ते प्रायः ।



## व्याघ्राय स्पर्धाह्वानं वराहस्य

वराहाः मलिनप्राणिनः इति भावना सर्वत्र अस्ति । किन्तु बहुपूर्वं ते तथा न आसन् । इतरे अरण्यवासिनः इव ते अपि बहुनिर्मलाः आसन् । किन्तु अनन्तरं ते कथं मलिनाः अभवन् इत्यस्मिन् विषये काचित् कुतूहलकारिणी कथा श्रूयते । सा च कथा एवम् अस्ति -

मेघालयस्य अरण्येषु सर्वेऽपि प्राणिनः सौहार्दभावेन निवसन्ति स्म । तस्मिन् अरण्ये सर्वेभ्यः प्राणिभ्यः पर्याप्तमात्रेण आहारः



आसीत् ।

एकदा कश्चन व्याघ्रः मृगयार्थं गतवान् । तद्दिने सः अनेकान् मृगान् प्राप्तवान् इत्यतः तस्य उदरं पूर्णम् आसीत् । अनन्तरं सः जलम् अन्विष्यन् गतवान् । किञ्चित्कालस्य अन्वेषणस्य अनन्तरं सः एकं सरोवरं प्राप्तवान् ।

तदा एव कश्चित् वराहपुत्रः बहुसमयतः सूर्यातपे पङ्के च क्रीडित्वा जलं पातुं तस्यैव सरोवरस्य समीपम् आगतवान् आसीत् । तत्र आगतं व्याघ्रं दृष्ट्ववतः तस्य शरीरे भयेन कम्पनम् आरब्धम् । भीतस्य तस्य पलायनार्थं मार्गः न आसीत् ।

व्याघ्रस्य महती पिपासा आसीत् । किन्तु वराहपुत्रस्य शरीरस्थेन पङ्केन सरोवरस्थं जलं मलिनं जातम् आसीत् । तत्रत्यं दुर्गन्धं सोढुम् अशक्तः व्याघ्रः अन्यं सरोवरं प्रति गमनाय मतिं कृतवान् । सः बालवराहः व्याघ्रस्य एतेन व्यवहारेण आश्चर्यचकितः अभवत् । बहुधा विचिन्त्य सः निर्णीतवान् यत् मत्तः भीतः सन् व्याघ्रः अन्यत्र गतः, अन्यथा



किमर्थं सः व्याघ्रः इतः धावेत् ? इति ।

एवं चिन्तयन् सः वराहपुत्रः आत्मानं गजवत् शक्तिशालिनं भावितवान् ।

सः व्याघ्रम् अनुधावन् तम् आकारयत् – ''भो भोः, प्रत्यागच्छतु । मया सह युद्धं करोतु । भवान् भीरुः किम् ? मा धावतु'' इति उक्तवान् ।

व्याघ्रः युद्धोत्सुकः न आसीत् । तस्य महती पिपासा आसीत् । अतः सः किञ्चित् मुखं

# अस्याः भूमेः जनाः



विविधजनजातीयानाम् आवासस्थानम् अस्ति मेघालयः । अत्रत्यासु जनजातिषु खासी, गारो, जैन्तिया इत्यादयः प्रमुखाः । एकैकस्याः अपि जनजातेः एकैकः विशिष्टः स्वजातीयः कश्चन गुणः भवति एव ।

प्राचीनकालतः अपि अत्रत्यानाम् प्रमुखः उद्योगः – वयनम् । सर्वदा एते वस्त्राणां वयने वेत्रेण वस्तूनां निर्माणे च निरताः भवन्ति । खासीजातीयाः वेत्रेण, कण्डोलनिर्माणे पीठनिर्माणे च कुशलाः सन्ति । गारोजातीयाः जैन्तियाजातीयाः च वस्त्रनिर्माणे कुशलाः भवन्ति ।

# लोकनृत्यानि



शतेन आनकैः सह क्रियामाणं वाङ्गलानामकं नृत्यं मेघालयस्य गारोजातीयानां प्रमुखम् आचरणम् अस्ति । एतत् कष्टानां समाप्तिं द्योतयति । उत्तमफलचयार्थम् एतत् नृत्यं तैः क्रियते । फलवत्तायाः देवस्य सत्योङ्गस्य गौरवार्थम् एतत् नृत्यं कुर्वन्ति ते । सामान्यतः एषः उत्सवः नवम्बर्मासे भवति । युवकाः वृद्धाः च विविधवर्णीयानि वस्त्राणि धृत्वा पक्षिणां वर्णमयपिच्छैः शिरः अलङ्कुर्वन्ति । दण्डगोलाकाराणाम् आनकानां ध्वन्यनुगुणं तालबद्धं नृत्यं कुर्वन्ति ते ।

नोङ्क्रेमनामकं नृत्यं खासीजातीयैः अक्टोबर्नवम्बर्मासयोः क्रियते । एतत् अपि उत्तमं फलं यत् प्राप्तं तदर्थं भगवते धन्यवादान् समर्पयितुम् एव । एतत् नृत्यं गृहात् बहिः एव भवति । मण्डलाकारेण स्थित्वा क्रियमाणे अस्मिन् नृत्ये महिलानां मण्डलम् अन्तः, पुरुषाणां मण्डलं च बहिः भवति । महिलाः कौशेयवस्त्राणि धृत्वा स्वर्णरजतप्रवालैः निर्मितानि आभरणानि धृत्वा नृत्यं कुर्वन्ति । मुरलेः, आनकस्य च ध्वनिम् अनुसरन्तः ते नृत्यन्ति ।

परिवर्त्य – ''अद्याहं भवता सह योद्धुं न शक्नोमि । श्वः अस्मिन् एव समये अत्र आगच्छतु । आवां युद्धं करिष्यावः'' इति उक्तवान् ।

तदा बालवराहः चिन्तितवान् यत् भीत्या एव व्याघ्रः युद्धं कर्तुं न इच्छति इति । तस्य



उत्साहः प्रवृद्धः । समग्रं जगत् एव मम पदतले अस्ति इति सः भावितवान् ।

सः सत्वरं गृहं गत्वा मित्राणां पुरतः बन्धूनां पुरतः च आत्मप्रशंसाम् आरब्धवान् – ''व्याघ्रः मत्तः भीतः अस्ति । अरण्यस्य अग्रिमः राजा अहमेव'' इति ।

सः सर्वान् कुटुम्बसदस्यान् आहूय प्रवृत्तं सर्वं विवृतवान् । ते सर्वे बालवराहस्य व्यवहारेण व्याकुलिताः । व्याघ्रः किमर्थं सरोवरे जलम् अपीत्वा एव निर्गतवान् स्यात् इति ते ऊहितवन्तः । बालवराहस्य मूर्खतां ज्ञात्वा तं ते सर्वे सम्यक् तर्जितवन्तः । 'व्याघ्रस्य स्पर्धाह्वानं कुर्वता मया कीदृशी मूर्खता आचरिता' इति सः बालवराहः अवगतवान् । 'श्वः प्रातः मम मरणं निश्चितम् । व्याघ्रेण च श्वः उत्तमः आहारः लभ्येत' इति सः चिन्तितवान् ।



बालवराहस्य वृद्धः पितामहः पौत्रस्य कार्याचरणेन व्याकुलः अभवत् । पौत्रस्य प्राणरक्षणार्थं किमपि करणीयम् इति पितामहेन चिन्तितम् । तदर्थं सः एकम् उपायं चिन्तितवान् ।

अनन्तरं सः पौत्रम् आहूय - ''भवता वाग्दानं कृतम् अस्ति खलु । तदनुसारं श्वः प्रातः तत्र गच्छतु । नो चेत् सः एव अत्र आगत्य अस्मान् सर्वान् मारयेत् । किन्तु ततः पूर्वं भवान् मलिनस्थाने सम्यक् लुण्ठनं कृत्वा गच्छतु । भवतः शरीरतः असह्यः दुर्गन्धः निर्गच्छेत्'' इति उक्तवान् ।

परेद्यवि प्रातः पितामहस्य सूचनानुसारं बालवराहः अवकरे, पङ्के, गजस्य पुरीषे च लुण्ठनं कृत्वा अरण्यं प्रविष्टवान् । तत्र सः व्याघ्रम् अन्विष्टवान् । व्याघ्रः अपि वराहं प्रतीक्षमाणः आसीत् । युद्धानन्तरं मध्याह्न-भोजनरूपेण सः वराहः एव खादनीयः इति तस्य विचारः आसीत् ।

यदा वराहः निकटम् आगतवान् तदा व्याघ्रः पृष्ठतः पदानि स्थापितवान् । ''भोः, किम् एतत् ? भवतः शरीरतः असह्यः दुर्गन्धः आगच्छति खलु !!'' इति उक्तवान् ।

तदा सः बालवराहः - ''भोः भवतः अपेक्षायाः अनुसारं भवता सह योद्धम् अहम् अत्र उपस्थितः अस्मि । मम पितामहेन पाठितानां कतिपयतन्त्राणाम् अभ्यासं कुर्वन् अस्मि'' इति उक्त्वा व्याघ्रस्य समीपं गतवान् । व्याघ्रः दुर्गन्धं सोढुम् अशक्तः । तस्य वमनशङ्का आगता । सः उच्चस्वरेण - ''गच्छतु । मम समीपं न आगच्छतु'' इति उक्तवान् ।

बालवराहः गमनाय कमपि व्याजं प्रतीक्षते स्म एव । तथापि स्वस्य अन्तरङ्गं गोपयन् सः पृष्टवान् - ''आवयोः युद्धस्य का गतिः ?'' इति ।

तदा व्याघ्रः - ''भवतः सर्वनाशः भवतु । अहं युद्धं न करोमि'' इति वदन् दुर्गन्धतः आत्मानं रक्षन् धावितवान् ।

बालवराहः व्याघ्रतः रक्षणं प्राप्य आनन्देन गृहं प्रति धावितवान् ।

गृहं प्रति गमनानन्तरं सः तत्कुटुम्बसदस्याः च चिन्तितवन्तः यत् मालिन्यतः एव वयं रक्षिताः इति । तस्मात् दिनतः ते सर्वे प्रतिदिनं मालिन्ये लुण्ठनं कृत्वा एव गृहात् बहिः गच्छन्ति स्म । तेषां सः अभ्यासः इदानीमपि अनुवर्तते ।



# अहो, फलितं भाग्यम्

हेलापुरे बलभद्रः बलरामः चेति उभौ सुहृदौ आस्ताम् । उभौ अपि तौ मध्यमवर्गीयौ । तयोः ज्येष्ठः बलभद्रः । तस्य स्वभावः शान्तः । सुशीलः सः । किन्तु बलरामः न तादृशः । सः अन्येषाम् उपहासे रुचिमान् । एतस्मात् अन्येषां क्लेशः भवति इत्यपि न चिन्तयति स्म सः । स्वसन्तोषः एव प्रधानः तस्य दृष्ट्या ।

कदाचित् ताभ्यां ज्ञातं यत् राजधान्यां राज्ञः जन्मदिनोत्सवः महता वैभवेन आचरिष्यते इति । तम् उत्सवं द्रष्टुं तौ गृहात् प्रस्थितौ । प्रस्थानसमये बलरामः बलभद्रम् उक्तवान् – ''वयम् अदृष्टपूर्वां राजधानीं गच्छन्तः स्मः । मार्गे किं विचित्रं दृश्यं दृश्येत इति अहं न जानामि । अतः मार्गे कुत्रापि स्वनाम-धामादिकथनं सर्वथा मास्तु । अवगतं खलु मया उक्तम् ? '' इति ।

बलभद्रः एतत् अनिच्छन् अपि मित्रस्य कथनं निराकर्तुम् अशक्नुवन् अङ्गीकारपूर्वकं शिरः चालितवान् । ततः तौ ग्रामात् प्रस्थित-वन्तौ । अनतिदूरे एव एकं कुटीरं दृष्टम् । तौ तत्समीपं गतवन्तौ । तत्र काचित् वृद्धा निवसति स्म । तस्याः बान्धवः कोऽपि न आसीत् ।

बलभद्रः ताम् अवदत् – ''अम्ब ! आवां राज्ञः जन्मदिनोत्सवं द्रष्टुं राजधानीं गच्छन्तौ स्वः । महती बुभुक्षा आवयोः । किम् अत्र भोजनं प्राप्येत ? भोजनं दत्तं चेत् वयं कानिचन रूप्यकाणि दास्यामः भवत्यै'' इति ।

''भोजनम् अवश्यं प्राप्यते । किञ्चित् विरम्यताम्'' इति उक्त्वा वृद्धा पाकशालां गत्वा पाकम् आरब्धवती । अर्धघण्टाभ्यन्तरे पाकः सिद्धः जातः ।

तौ पाणिपादं प्रक्षाल्य भोजनार्थम् उपविष्ट-वन्तौ। वृद्धया सज्जीकृतः पाकः रुचिकरः

महर्षिः

आसीत् । तौ आनन्देन भोजनं कृतवन्तौ ।

प्रस्थानात् पूर्वं बलभद्रः तस्यै कानिचन रूप्यकाणि दत्त्वा अवदत् – "एतानि कानिचन रूप्यकाणि स्वीकरोतु । पाकः स्वादुः आसीत् । नितराम् उपकृतौ आवाम् " इति ।

"मया को वा महान् उपकारः कृतः ? यावत् जीवामि तावत् किमपि करणीयं खलु ? अतः आगतेभ्यः भोजनं व्यवस्थापयामि । न जाने, एषा वराकी पृष्ठवेदना मां कदा परलोकं गमयिष्यति इति" इति दीर्घं निश्श्वसती अवदत् वृद्धा ।

"किमर्थम् एतावती चिन्ता? का वेदना भवतीं बाधते ?" इति पृष्टवान् बलभद्रः ।

"केभ्यश्चित् वर्षेभ्यः वराकी पृष्ठवेदना एषा मां नितरां पीडयति । चिकित्सया एषा अपगता भवेत् । किन्तु चिकित्सां प्राप्तुं मत्समीपे धनं क्व ? अतः एतां वेदनां कष्टेन सहे । नान्या गतिः मम" इति अवदत् वृद्धा ।

एतत् श्रुतवति बलरामे परोपहासबुद्धिः जागरिता । सः उत्साहेन अवदत् – "अम्ब ! भवत्याः एतां पीडां निवारयितुम् उत्तमः उपायः मत्समीपे अस्ति । भवत्याः कुटीरस्य पृष्ठतः कश्चन वृक्षः अस्ति खलु ? तस्य शाखायां रज्जुं बद्ध्वा रज्ज्वाः अन्येन अग्रेण कटिं बध्नातु । ततः दशवारम् इतस्ततः लम्बताम् । तस्मात् भवत्याः पृष्ठवेदना अपगता भविष्यति । यदि कदाचित् तथा न भवेत् तर्हि अपरः उपायः आश्रयणीयः । वृक्षस्य पार्श्वे गर्तं कृत्वा तं मृत्तिकया पूरयित्वा मृत्तिकाराशौ घण्टाचतुष्टयं यावत् भवती तिष्ठतु । एतस्मात् तु वेदना अपगच्छेत् एव" इति ।



"योग्यः उपायः सूचितः भवता । यदि एतस्य आश्रयणेन मम पृष्ठवेदना अपगच्छेत् तर्हि प्रतिदिनम् अहं भवतः नाम स्मरेयम् । वत्स ! भवता स्वनाम न उक्तम् एव । किं नाम भवतः ?" इति अपृच्छत् वृद्धा ।

तदा बलरामः विना सङ्कोचम् उत्तरं दत्तवान् – "मम नाम बलभद्रः । हेलापुरीयः अहम् । शिवसरोवरस्य पार्श्वे एव मम गृहम्" इति ।

बलभद्राय बलरामस्य एतत् कथनं न अरोचत । एषा वृद्धा एतस्य वचनेषु विश्वासं न कुर्यात् । कुचेष्टावचनं मत्वा सा उपेक्षेत । ताम् असम्बद्धं किमपि उक्त्वा बलभद्रत्वेन स्वनाम उक्त्वा ममापि अपकीर्तिं कर्तुम् इच्छति एषः । एतस्य सहवासः एव अपायकरः' इति अचिन्तयत् बलभद्रः ।

ततः राजधानीं गतौ तौ राज्ञः जन्मदिनोत्सवं



दृष्ट्वा सन्तुष्टौ सन्तौ स्वग्रामं प्रत्यागतौ । ततः दश वर्षाणि अतीतानि । अथ कदाचित् बलभद्रः बलरामः च गृहाङ्गणे उपविश्य वार्तालापं कुर्वन्तौ आस्ताम् । अन्ये अपि केचन तत्र आसन् । तदा कश्चन अपरिचितः तत्र आगत्य अपृच्छत् – ''एतस्मिन् ग्रामे बलभद्रस्य गृहं कुत्र ?'' इति ।

''अहमस्मि बलभद्रः । किमर्थं मम गृहं पृष्टं भवता ? तत्र किं कार्यं भवतः ?'' इति आश्चर्येण पृष्टवान् बलभद्रः ।

सः पुरुषः सुगन्धिपुरतः आगतः आसीत् । सुगन्धिपुरवासिनी वृद्धा – 'मम समग्रा सम्पत्तिः – तन्नाम विंशतिसहस्रं रूप्यकाणि, पञ्चैकर-मिता समृद्धा भूमिः, विशालं वासभवनं च – शिवसरोवरस्य पार्श्वे निवसते हेलापुरवासिने बलभद्राय दातव्या' इति मरणशासनं लिखित्वा दिवं गता आसीत् । सुगन्धिपुरस्य ग्रामाधिकारी तस्य पुरुषस्य द्वारा वार्ता प्रेषित-वान् आसीत् यत् बलभद्रेण सुगन्धिपुरम् आगत्य स्वसम्पत्तिः स्वाधीनीकरणीया इति ।

एतां वार्तां श्रुत्वा बलभद्रः बलरामः च आश्चर्यचकितौ । ताभ्यां सा अन्नदात्री वृद्धा स्मृता । निर्धना सा एतावतीं सम्पत्तिं कथं सम्पादितवती इति ताभ्यां न अवगतम् ।

तौ तेन पुरुषेण सह गत्वा सुगन्धिपुरस्य ग्रामाधिकारिणा मिलितवन्तौ । तदा ताभ्यां प्रवृत्तं समग्रं ज्ञातम् ।

बलरामेण सूचितम् उपायम् अनुसर्तुम् इच्छन्ती वृद्धा वृक्षशाखायां रज्जुं बद्ध्वा रज्ज्वाः अपरपार्श्वेन कटिं बद्ध्वा लम्बनं

कृतवती । तदा शाखा भग्ना सती अपतत् । शाखामूले स्थितात् कोटरात् नाणकराशिः अपतत् । प्रायः तस्याः पूर्वजैः तत्र नाणकानि सञ्चितानि आसन् । प्रथमोपायतः पृष्ठवेदना यदा न अपगता तदा वृद्धा द्वितीयस्य उपायस्य अनुसरणं कर्तुम् इच्छन्ती गर्तं कारितवती । तत्र तया ताम्रघटः प्राप्तः । सः ताम्रघटः अपि सुवर्णनाणकैः पूर्णः आसीत् । एवम् अपारम् ऐश्वर्यं प्राप्तवती वृद्धा समर्थाय चिकित्सकाय यथायोग्यं शुल्कं दत्त्वा चिकित्सां कारितवती । वेदना तस्मात् अपगता । ततः सा विशालं गृहं निर्माप्य सेवायै सेवकान् नियुक्तवती । कृषिभूमिम् अपि क्रीतवती । एवं तस्याः जीवनं सुखमयं जातम् । मरणकालः यदा आसन्नः तदा बान्धवरहिता वृद्धा मरणशासने लिखितवती यत् मम ऐश्वर्यं बलभद्राय दातव्यम् इति । सम्पत्तिप्राप्तेः मूलकारणं बलभद्रः एव इति तस्याः चिन्तनम् आसीत् । वृद्धायाः पीडनाय कमपि उपायम् उक्त्वा मित्रस्य अपख्यातिं कर्तुम् इच्छन् बलरामः स्वनाम बलभद्रः इति उक्तवान् आसीत् । इदानीं बलभद्रेण परमभाग्यं प्राप्तम् अस्ति !

बलभद्रः अचिन्तयत् यत् एतस्याः सम्पत्तेः वास्तविकः उत्तराधिकारी बलरामः एव, यतः सः एव उपायं सूचितवान् आसीत् इति । सः वस्तुस्थितिं ग्रामाधिकारिणम् उक्त्वा निवेदितवान् यत् एषा सम्पत्तिः बलरामाय दातव्या इति । ग्रामाधिकारी एतत् निराकुर्वन् – ''मरणशासनपत्रे यथा लिखितं भवति तथैव करणीयं मया । तत्र परिवर्तनं कर्तुं नास्ति मम कोऽपि अधिकारः'' इति उक्त्वा सम्पत्तिं बलभद्राधीनां कृतवान् ।

वराकः बलरामः म्लानमुखः सन् एतत्सर्वं पश्यन् अतिष्ठत् । तदा बलभद्रः तं सान्त्वयन् – ''मित्र ! अलं चिन्तया खेदेन वा । भवतः उपहासप्रवृत्तेः फलरूपेण हितम् अहितम् चापि घटितम् अस्ति । सा वृद्धा अन्तिमदिनेषु वा सुखं प्राप्तवती । तस्य परिणामतः एतत् ऐश्वर्यम् आवाभ्यां प्राप्तम् । सर्वदा एवमेव स्यात् इति न । अतः इतः परं भवान् परोपहासप्रवृत्तिं परित्यज्य उत्तमव्यवहारं सर्वत्र दर्शयतु । यावत् प्राप्तं तस्य अर्धभागः दीयते मया भवते'' इति उक्त्वा तस्याः सम्पत्तेः अर्धभागं बलरामाय दत्तवान् ।



# भारतम् अवगम्यताम्

१. देवानां गुरुः कः ?
अ. शुक्राचार्यः
आ. द्रोणाचार्यः
इ. बृहस्पतिः
ई. वेदव्यासः

२. कः भारतीयः गणितज्ञः 'पै' ($\pi$) इत्यस्य आसन्नमूल्यं निर्दिष्टवान् ?
अ. आर्यभटः
आ. भवभूतिः
इ. वराहमिहिरः
ई. भास्कराचार्यः

३. 'पूसा इन्स्टिट्यूट्' इत्येषा सुप्रसिद्धा काचित् संस्था । सा केन विषयेण सम्बद्धा ?
अ. ज्योतिषेण
आ. गणितेन
इ. कृषिणा
ई. सङ्ख्याशास्त्रेण



४. उत्तरभारते विश्वविद्यालयं संस्थापितवतः चित्रम् एतत् । चित्रस्थः एषः कः? विश्वविद्यालयस्य नाम किम् ?

५. सः विश्वविद्यालयः कः, यस्य च नाम पूर्वं 'थाम्सन् कालेज् आफ् इञ्जनियरिंग्' इति आसीत् ?
अ. अण्णाविश्वविद्यालयः
आ. जाधवपुरविश्वविद्यालयः
इ. रूर्केविश्वविद्यालयः
ई. काकतीयविश्वविद्यालयः

६. मानवताशास्त्रसम्बद्धः भारतीयः कः ?
अ. डा॰ ए. लक्ष्मणस्वामिमुदलियारः
आ. डा॰ एल्.के. अनन्तकृष्ण-अय्यरः
इ. डा॰ अमर्त्यसेनः
ई. डा॰ आशुतोषमुखर्जी

*(उत्तराणि अग्रिमे मासे)*

### *'जून्'मासस्य प्रश्नानाम् उत्तराणि*

*१. इ. दक्षिणराज्ञी इति ।*
*२. अ. गोलगुम्बजभवने ।*
*३. हैदराबादनगरे ।*
*४. सर् एड्मण्ड् हिलेरी । एषः तेनसिङ्ग्-नार्गेवर्येण सह १९५३ तमे वर्षे मे-मासस्य २९ तमे दिनाङ्के एवरेष्ट्-शिखरम् आरूढवान् ।*
*५. मेट्टुपालयंतः ऊटिं (उदकमण्डलं) प्रति गच्छत् रेलयानं 'लोको'यन्त्रेण युक्तं भवेत्, न तु चित्रे यथा दर्शितं तथा डिसैल्यन्त्रेण विद्युद्यन्त्रेण वा । यतः सः पर्वतमार्गः ।*
*६. ई. भोलू ।*



# विघ्नेश्वरः

गुहाद्वारे पर्वताकारेण स्थितां महाशिलां गजराजः लघुशिलाखण्डम् इव लीलया अपसारितवान्, गुहायाः अन्तः गतवान् च । अल्पे एव काले शुण्डया आभरणानां राशिम् आनीय सौदामिन्याः पुरतः राशीकृतवान् । चन्द्रहारादीनि आभरणानि तस्याः कण्ठे समर्प्य पिता इव शुण्डया तस्याः पृष्ठम् आमृष्टवान् । अन्यानि आभरणानि वस्त्रेण बद्ध्वा सः गजः शुण्डाचालनसङ्केतेन सौदामिनीं सूचितवान् यत् एतानि आभरणानि गृहं नयतु इति । सौदामिनी तानि आभरणानि गृहीत्वा यदा गन्तुम् उद्युक्ता तदा गजः तां कल्याणीनगरं प्रापय्य अरण्यं प्रतिगतवान् ।

सुवर्णमूर्तिरिव स्थितां सुवर्णाभरणैः आवृतां सुवर्णाभरणग्रन्थिं वहन्तीं स्नुषां दृष्ट्वा कलहकण्ठी नितराम् आश्चर्यचकिता । सौदामिनी यदा प्रवृत्तं सर्वं निवेदितवती तदा सा स्वगतम् इव उक्तवती – 'अहो, कपित्थ-फलानि गजस्य अतिप्रियाणि !' इति ।

तस्मिन् एव दिने कलहकण्ठी विपणिं गत्वा बहूनि कपित्थफलानि क्रीत्वा प्रत्यागतवती । तानि स्वीकृत्य आभरणानि आनेतुम् एकं स्यूतम् अपि स्वीकृत्य सा महता उत्साहेन अरण्यं प्रति प्रस्थितवती । अरण्यं प्राप्तवती सा सर्वत्र परिशीलनं कृतवती । किन्तु तया कुत्रापि कोऽपि कपित्थवृक्षः न दृष्टः एव । अन्ते सा एकस्य तिन्त्रिणीवृक्षस्य अधः उपविश्य एकं कपित्थफलं हस्तेन गृहीत्वा गजराजकीर्तनम् आरब्धवती –

एहि एहि गजराज
भक्षय कपित्थान्येतानि
देहि देहि गजराज



पतितानि आसन् । तानि पुनः पुनः स्पृशन्ती उन्मत्ता इव हसन्ती आनन्दं च अनुभवन्ती सा तानि एकैकशः धृतवती । स्यूते अपि आभरणानि पूरितवती सा । ततः कष्टेन पदं निक्षिपन्ती गुहाद्वारसमीपं गतवती । किन्तु दौर्भाग्यं नाम गुहायाः द्वारं पिहितम् आसीत् । तस्याः पुरतः घोरा रक्तनेत्रयुक्ता कृष्णकाया अन्धकारसदृशी काचित् ब्रह्मराक्षसी स्थितवती आसीत् । सा राक्षसी विकटाट्टहासं कृत्वा कलहकण्ठीम् आनन्देन दृष्टवती ।

क्षणकालानन्तरं गुहां कम्पयता स्वरेण सा अवदत् – "अये कलहकण्ठि ! भवती स्नुषापीडिका श्वश्रूः चेत् अहं श्वश्रूपीडिका स्नुषा अस्मि । मम कथां शृणोतु तावत्" इति ।

ततः राक्षस्या स्ववृत्तान्तः आरब्धः – "अहं पूर्वं रूपवती आसम् । मातापितरौ मम नाम कृतवन्तौ आस्तां कलहंसी इति । किन्तु पतिगृहं प्रति गमनस्य अनन्तरं मम कलहस्वभावस्य कारणतः मया ग्रामे नाम प्राप्तं कलहदुन्दुभिः इति ।

हे कलहकण्ठि ! भवती यावत् क्रूरा तावत् एव मृदुः आसीत् मम श्वश्रूः । सा मृदुत्वस्य प्रतिरूपम् आसीत् । पतिगृहं प्रति गमनस्य अनन्तरं वर्षाभ्यन्तरे मम पतिः गृहं त्यक्त्वा देशाटनाय निर्गतः । एतस्मात् भवती ऊहितुं शक्नुयात् यत् अहं कीदृशी उत्तमा नारी आसम् इति । आभूषणानि प्राणेभ्यः अपि प्रियाणि आसन् मम । सुवर्णफलां कृषिभूमिं विक्रीय आभरणानि कारितानि मया । श्वश्रूः अपि स्वसमीपे स्थितानि सर्वाणि आभरणानि मह्यं

मूल्यवन्ति बहून्याभरणानि
एहि एहि गजराज
सत्वरमेहि गजराज

कलहकण्ठ्या एतदेव गीतं पुनः पुनः गीतम् । तथापि गजराजस्तु नागतः । ततः अल्पे एव काले कश्चन घोरः ध्वनिः श्रुतः । कलहकण्ठी चिन्तितवती यत् अयं ध्वनिः गजराजस्य घीङ्कारः एव स्यात् इति । अतः सा कण्ठं दीर्घीकृत्य दृष्टवती । तावता कश्चन व्याघ्रः गर्जन् तस्याः अभिमुखं वेगेन आगतवान् । एतत् दृष्ट्वा भीता कलहकण्ठी उत्थाय धावितवती । मध्येमार्गं शिलाघट्टनात् सा पतितवती । सौभाग्यं नाम यत्र तया पतितं तत्र एका गुहा आसीत् । 'अहो, मम भाग्यं फलितम् !' इति स्वगतं वदन्ती सा गुहां प्रविष्टवती ।

गुहायाः अन्तः राशिरूपेण आभरणानि

दत्तवती । एतादृश्यै उत्तमस्वभावायै तस्यै वृद्धायै मया भोजनमपि सम्यक् न दत्तम् । दुर्बलया तया गृहकार्याणि सर्वाणि कारितानि मया ।

मम एतादृशैः व्यवहारैः श्वश्रूश्वशुरौ नितरां खिन्नौ । वातापिक्षेत्रं गत्वा विघ्नेश्वरस्य दर्शनं कृत्वा तत्रैव देहत्यागः करणीयः इति निश्चित्य तौ गृहात् निर्गतौ । मया श्वश्र्वाः हस्ते कश्चन लघुः वस्त्रग्रन्थिः दृष्टः । अहं बलात् तं ग्रन्थिम् आक्रष्टुम् उद्युक्ता । तस्मात् भूमौ पतिता श्वश्रूः शिरसि आघातं प्राप्य तत्रैव प्राणान् अत्यजत् ।

मम श्वशुरः नितान्तं सहनशीलः । सः मम सर्वान् दुर्व्यवहारान् दृष्ट्वापि मौनेन तिष्ठति स्म । किन्तु एतदवसरे क्रोधं निग्रहीतुम् अशक्नुवन् सः अवदत् - ''अये दुष्टे, भवती मम स्नुषा अस्ति । अन्यथा अहं भवतीं शापेन दग्धवान् स्याम् । प्रत्यागतं मम पुत्रं सम्यक् पश्येत् इति धिया मया भवत्याः सर्वे दुर्व्यवहाराः सोढाः । किन्तु किं करवाणि ? सर्वं व्यर्थं जातम् । भवत्यां मम एका एव प्रार्थना यत् यदा मम पुत्रः प्रत्यागमिष्यति तदा तं कृपया योग्येन क्रमेण पश्यतु'' इति । एवम् उक्त्वा दुःखातिशयस्य कारणतः सोऽपि तत्रैव प्राणान् अत्यजत् ।

एतावता कालेन तत्र कश्चन संन्यासी आगतः । सः मृतयोः मम श्वश्रूश्वशुरयोः शरीरयोः उपरि पतित्वा रोदनम् अकरोत् । अहं च श्वश्र्वाः हस्ते स्थितं ग्रन्थिम् आकृष्य उद्घाट्य दृष्टवती । तत्र आसन् त्रिचतुराणि जीर्णवस्त्राणि ।



सः संन्यासी मां तीक्ष्णया दृष्ट्या पश्यन् - ''अये दुष्टे, भवत्या ब्रह्मराक्षसीरूपेण जन्म प्राप्तव्यम् आसीत् '' इति अवदत् । एतदनन्तरं सः मातापित्रोः अन्त्यसंस्काराय ततः निर्गतवान् । सः संन्यासी न अन्यः, अपि तु मम रूपयौवनादिकं दृष्ट्वा व्यामुग्धः सन् मां परिणीतवान् मम पतिः एव आसीत् ।''

क्षणकालस्य मौनस्य अनन्तरं सा स्वकथाम् अनुवर्तितवती - ''आभरणमोहः मां पापकार्येषु प्रावर्तयत् । मया कैभ्यश्चित् लुण्ठाकेभ्यः आश्रयः दत्तः । अतः जनाः मां 'लुण्ठाकानां राज्ञी' इति निर्दिष्टवन्तः । एतस्याम् एव गुहायां लुण्ठाकाः चोरितानि आभरणानि सङ्गृह्णन्ति स्म । एतां सम्पत्तिं स्वायत्तीकर्तुम् इच्छन्ती अहं तान् विषं भोजितवती । मरणात् पूर्वं ते प्रतीकारं साधयितुम् इच्छन्तः मम वासभूतायाः गुहायाः



द्वारं महाशिलया पिधाय मां गुहैकवासिनीं कृतवन्तः ।

कलहकण्ठि ! अहम् एतस्याम् एव गुहायाम् आभरणराशिं पश्यन्ती बुभुक्षा-पिपासादिकं सोढुम् अशक्तवती प्राणान् अत्यजं, पिशाचीरूपं प्राप्य अत्र वसामि च । गुहां प्रविष्टवान् गजराजः मां सूचितवान् यत् भवत्यां ज्ञानोदयः कारितः चेत् एतस्मात् पिशाचजन्मतः मम मुक्तिः इति ।''

''गजराजः भवत्याः स्नुषायै यानि आभरणानि दत्तवान् तानि वस्तुतः सुवर्ण-मयानि आसन् । किन्तु भवती यानि धृतवती अस्ति तानि सर्वाणि कृत्रिमाणि । अतः आत्मना धृतानि तानि परिशीलयतु तावत्'' इति अवदत् ब्रह्मराक्षसी ।

एतदवसरे तस्याः हस्ते स्थितः ग्रन्थिः स्वयम् उद्घाटितः जातः । ततः सर्प-वृश्चिकादयः निर्गताः । गुहायां सर्वत्र सञ्चारम् आरब्धवन्तः च ।

स्वशरीरे अपि सञ्चरतः सर्पवृश्चिकादीन् दृष्ट्वा कलहकण्ठी भीत्या क्रन्दनं कृतवती ।

''अये कलहकण्ठि ! स्नुषां पीडयन्ती भवती कलहकण्ठी इति ख्याता जाता । श्वश्रूं पीडयन्ती अहं कलहदुन्दुभिः इति प्रसिद्धा अभवम् । अस्मादृश्यः स्त्रीजातेः कलङ्काः भवन्ति । उत्तमस्वभावयुक्तायाः स्नुषायाः विषये यदि उत्तमः व्यवहारः दर्श्येत तर्हि भवत्याः हानिः न भवेत् । अन्यथा अत्रैव मरणं स्यात्, ब्रह्मराक्षसीत्वं च प्राप्तव्यं स्यात् । सर्वम् अवगत्य यथोचितं निर्णयतु'' इति अवदत् कलहदुन्दुभिः ।

एतत् श्रुत्वा स्वकर्णौ गृहीत्वा राक्षसीं प्रणमन्ती कलहकण्ठी विनयपूर्वकम् अवदत् – ''मया इदानीं विवेकः प्राप्तः । इतः परं स्नुषायाः विषये उत्तमव्यवहारं दर्शयिष्यामि । मां क्षाम्यतु भवती । गुहातः निर्गमनाय मार्गं कल्पयतु च'' इति ।

ब्रह्मराक्षसी कलहकण्ठीम् अरण्यात् बहिः आनीय कल्याणीनगरसीमापर्यन्तं प्रापय्य – ''यदि वचनभङ्गः क्रियेत तर्हि गुहायां बन्धनं, ब्रह्मराक्षसीत्वं च प्राप्यते इत्येतत् स्मरतु । अविवेकं मा करोतु'' इति आदिश्य स्वयं दग्धा जाता ।

ततः कलहकण्ठी धावन्ती गृहं प्राप्य सौदामिन्याः हस्तं प्रीत्या गृहीत्वा अवदत् – ''वत्से ! क्षन्तव्या अहम् । भवती मत्पुत्रः च परस्परानुरागेण जीवतः चेत् तदेव सौभाग्यं मम'' इति ।

विघ्नेश्वरस्य कृपया श्वश्र्वाम् जातं परिवर्तनं लक्षितवती सौदामिनी नितरां सन्तुष्टा जाता। एतदनन्तरं कलहकण्ठी पुनरपि कलकण्ठी जाता।

पावनमिश्रः एवं कथां समाप्य बालान् अपृच्छत् - "वत्साः ! वदन्तु, सः गजः कः आसीत् ?" इति।

सर्वे बालकाः एकस्वरेण उक्तवन्तः - "सः आसीत् पूज्यः विघ्नेश्वरः ! भगवान् विघ्नेश्वरः" इति। एतदनन्तरं ते प्रसादं स्वीकृत्य स्वगृहं प्रतिगतवन्तः।

पावनमिश्रः प्रतिदिनम् अपि मन्दिरभित्तौ स्थितानि चित्राणि अवलम्ब्य कथाः श्रावयति स्म। तासां श्रवणात् बालेषु ज्येष्ठेषु च विघ्नेश्वरे भक्तिः वर्धते स्म।

एकदा कश्चन सङ्गीतप्रियः एकं चित्रं दर्शयन् अवदत् - "आर्य ! एतत्सम्बन्धिनीं कथां श्रावयतु" इति। तस्मिन् चित्रे कश्चित् तम्बूरं वादयन् आसीत्, तस्य च पुरतः नृत्यन् आसीत् विघ्नेश्वरः।

पावनमिश्रः कथाम् आरब्धवान् -

"वातापिनगरं कवीनां, पण्डितानाम्, अन्यशास्त्रनिपुणानां च प्रिया आश्रयभूमिः आसीत्। तत्र स्थितेषु अन्यतमः आसीत् गजाननपण्डितः। सः श्रेष्ठः विद्वान्, बहुमुखप्रतिभावान् च। तस्य कण्ठे काचित् सम्मोहनशक्तिः आसीत्। सः वातापिगणपतिम् अधिकृत्य असंख्यानि कीर्तनानि रचितवान् आसीत्। तदीयः बन्धुः बालः गणेशभट्टः गानसमये तालवाद्यं वादयति स्म।

गजाननपण्डितः मधुरेण स्वरेण - "धिमिकिट, धिमिकिट ताण्डनृत्यं कुरु गजानन !" इति यदा विविधैः रागैः गायति स्म तदा विघ्नेश्वरः अपि विविधानि रूपाणि



वर्णान् च धरन् नृत्यं कुर्वन् श्रोतॄन् द्रष्टॄन् च आनन्दयति स्म ।

हंसध्वनिरागकाले श्वेतः राजहंसः इव, मायामालवरागकाले प्रातःकालीनं रविबिम्बम् इव, भैरवीरागकाले रक्तकमलम् इव, हिन्दोलरागावसरे नीलाकाशः इव, नीलाम्बरीरागसमये नीलकुमुदम् इव, आनन्दभैरवीरागावसरे पूर्णिमाचन्द्रः इव च शोभते स्म नृत्यरतः विघ्नेश्वरः ।

गजाननपण्डितः सत्कारसम्मानादीनां प्राप्तौ समुत्सुकः तु न आसीत् । तथापि श्रेष्ठसम्मानत्वेन प्राप्यमाणा सुवर्णमयी गणेशमूर्तिः प्रतिवर्षं तेनैव प्राप्यते स्म । ताभिः प्रतिमाभिः पूर्णम् आसीत् तदीयं गृहम् ।

देशस्य सर्वे विद्वांसः गजाननपण्डितविषये महान्तम् आदरं वहन्ति स्म । किन्तु वातापिनगरस्य केचन पण्डिताः तस्मै असूयन्ति स्म । तेषां प्रमुखः आसीत् स्वरकेसरी ।

स्वरकेसरी सदा स्वस्य विद्वत्तायाः प्रदर्शने समुत्सुकः तिष्ठति स्म । किन्तु सः यदि मुखम् उद्घाटयति तर्हि सिंहगर्जनम् एव श्रूयते स्म । मृदङ्गविवादकाः यथा क्लेशम् अनुभवेयुः तथा गायति स्म सः ।

परन्तु गजाननपण्डितः न तादृशः । स्वस्य पाण्डित्यस्य प्रदर्शने तस्य आसक्तिः न आसीत् । विघ्नेश्वरं भक्त्या स्मरन् सः गाने लीनः भवति स्म । गायन् सः क्वचित् मूकः भवति स्म । एतादृशाः प्रसङ्गाः स्वरकेसरिप्रभृतीनां कृते उत्तमावसरः भवति स्म गजाननपण्डितस्य निन्दनाय ।

ते वदन्ति स्म – ''गजाननपण्डितः शास्त्रज्ञानवान् न । संयोगवशात् प्राप्तं ज्ञानं तस्य । अतः सः सभासु यथा स्फुरति तथा गायति'' इति ।

किन्तु गजाननपण्डितः एतत् उपेक्षया पश्यति स्म । सः विघ्नेश्वरेण सह मनसि एव वार्तालापं कुर्वन् इव गायति स्म । तस्य गाने अनिर्वचनीया शक्तिः आसीत् । सा श्रोतॄन् सर्वान् आनन्दसागरे मज्जयति स्म, इहप्रपञ्चं विस्मारयति स्म च ।

'एतस्मिन् वर्षे गणेशस्य स्वर्णप्रतिमा गजाननपण्डितस्य गृहं यथा न गच्छेत् तथा करणीयम् एव' इति विचिन्त्य स्वरकेसरी एकां महतीं योजनाम् आरचितवान् ।





# राज्ञः कृपा

कमलाकरः कनकगिरिराज्यं पालयति स्म । तस्य कलाविषये महती आसक्तिः । अतः तस्य आस्थाने सङ्गीतगोष्ठ्यः पण्डितगोष्ठ्यः च निरन्तरं प्रचलन्ति स्म । तस्य अन्यः अपि आसक्तिविषयः आसीत् । स च - प्रकृति-सौन्दर्यस्य आस्वादनम् । सः वेषान्तरेण अरण्यं गत्वा तत्र निसर्गसौन्दर्यम् आस्वदमानः पक्षिणां कलरवस्य श्रवणे लीनः भवति स्म ।

अरण्यस्य सीमायाः पार्श्वे एकं गृहम् आसीत् । यदा राज्ञा तेन मार्गेण गम्यते स्म तदा तस्मात् गृहात् पक्वस्य वृन्ताकस्य गन्धः आघ्रायते स्म । तस्मिन् खादनेच्छाम् उत्पादयति स्म सः । किन्तु राजा कथमपि आत्मानं निगृह्य राजधानीं प्रतिनिवर्तते स्म ।

यद्यपि राज्ञः प्रासादे सर्वविधानाम् अपि खाद्यानां प्राप्तिरस्ति, राजा यदिच्छति तत् क्षणाभ्यन्तरे सिद्धं भवति, तथापि तादृशः सुगन्धः कदापि तेन पाके प्राप्तः न आसीत् एव । तेन निर्णीतं यत् तस्मिन् गृहे एकवारं वा भोजनं करणीयमेव इति ।

कस्मिंश्चित् दिने वेषं परिवर्त्य अरण्यस्य पार्श्वे स्थितं गृहं गत्वा द्वारताडनम् अकरोत् राजा ।

किञ्चित्कालानन्तरं काचित् महिला आगत्य द्वारम् उद्घाट्य - ''कः भवान् ?'' इति पृष्टवती ।

राजा - ''अहं अन्यप्रदेशीयः । बुभुक्षितः अस्मि । खादितुं किमपि लभ्यते किम् ?'' इति पृष्टवान् ।

''आवयोः भोजनम् इदानीमेव समाप्तम् । तथापि नास्ति चिन्ता । बुभुक्षितं तथैव न प्रेषयामि । अन्तः आगच्छतु तावत्'' इति सा तम् आहूतवती । तस्याः नाम आसीत् रत्ना इति ।

राजा अन्तः आगत्य पुरातने एकस्मिन् आसने उपविष्टः । पार्श्वे एव निद्रां कुर्वन्तं पतिं परमेशं रत्ना उत्थापयन्ती उक्तवती - ''कोऽपि अतिथिः आगतः । बहु बुभुक्षितः



अस्ति सः । वृन्ताकस्य व्यञ्जनं करणीयम् । तेन सह पञ्चषाः रोटिकाः अपि करणीयाः'' इति ।

परमेशः उत्थाय राजानं तीक्ष्णदृष्ट्या एकवारं दृष्ट्वा गृहस्य पृष्ठभागे स्थितां वाटिकां गत्वा वृन्ताकानि आनीय पाकं कर्तुम् उद्युक्तः ।

''अस्माकं राज्ञः कृपया मम पतिः पाचकः सञ्जातः'' इति वदन्ती रत्ना हसितवती । तस्याः पत्युः पाचककार्ये राज्ञः कृपा कथमिति राज्ञा न ज्ञातम् ।

अल्पे एव काले वृन्ताकस्य व्यञ्जनं रोटिकाश्च सिद्धाः । रत्ना आगतम् अतिथिम् उद्दिश्य – ''भोजनं कर्तुम् आगच्छतु । अस्माकं राज्ञः कृपया अतिथिभ्यः पाणिपादं प्रक्षालयितुं जलं दातुमपि वयम् असमर्थाः'' इति उक्त्वा पुनः हसितवती ।

ततः व्यञ्जनं रोटिकाश्च परिवेषयन्ती सा उक्तवती– ''राज्ञः कृपया अहं भवते एतादृशं भोजनं ददती अस्मि'' इति ।

पूर्णोदरं खादित्वा हस्तं प्रक्षाल्य आगतः राजा ताम् अवदत् – ''भवती प्रतिकार्यं राजानं स्मरति । अनेन भवत्याः राज्ञि स्थिता भक्तिः स्फुटं भासते'' इति ।

राज्ञः वचनं श्रुत्वा सा उदरोपपीडं हसितवती । तेन आश्चर्यचकितः राजा किञ्चित् कोपेन एव तां पृष्टवान् – ''राज्ञः विषये भवत्याः आदरः भक्तिः च किञ्चिदपि नास्ति किम् ?'' इति ।

तदा रत्ना उक्तवती – ''मम वचनं सावधानतया शृणोतु । अस्माकं राजा एतत् न जानाति एव यत् स्वस्य राज्ये स्थितेषु जनेषु सामान्याः अपि सन्ति इति । यतः सः कवीनां कलाकाराणां च पोषणे एव रतः, न तु अन्येषाम् । मम पतिः विद्यावान् । किन्तु तया विद्यया न किमपि प्रयोजनं, यतः राज्ये योग्यैः अपि उद्योगः एव न लभ्यते । वरदक्षिणारूपेण मम पितृभ्यां दत्तेन धनेन गृहस्य व्ययभारम् अहं कथमपि निर्वहन्ती अस्मि । मम पतिः

पाकं स्वयमेव करोति, यतः पत्नी अधिकं व्ययं कुर्यात् इति भीतिः तस्य । तस्य उद्योगः नास्ति इत्यत्र राज्ञः कृपा एव कारणम्'' इति ।

राज्ञि चिन्तनम् आरब्धम् । तदा पुनः रत्ना कथनम् अनुवर्तितवती – ''नगरस्य पार्श्वे प्रवहन्त्याः नद्याः जलं सर्वं समुद्रं गच्छति । अनेन जलेन प्रजानाम् उपयोगः नास्ति । 'केन प्रकारेण एतस्य जलस्य उपयोगः जनैः प्राप्तुं शक्यते' इत्यपि राजा न जानाति । अतः एव गृहम् आगतानाम् अतिथीनां पाणिपादं प्रक्षालयितुम् अपि जलं दातुम् असमर्था अहं भवन्तं साक्षात् पाकगृहमेव नीतवती'' इति ।

राजा तस्याः वचनम् अवधानपूर्वकं शृण्वन् आसीत् । रत्नायाः वचनं यदा समाप्तं तदा राजा हसन् तां पृष्टवान् – ''राज्ञः कृपा अन्यैः अपि प्रकारैः प्रवहेत् खलु । तादृशं किमपि अस्ति चेत् वदतु'' इति ।

एतत् श्रुतवत्याः रत्नायाः मनसि सन्देहः उत्पन्नः – विदेशीयः एषः राज्ञः विषये किमर्थम् एतावत् औत्सुक्यम् दर्शयति इति । तथापि पुनः सा तम् उक्तवती – ''जनानां कृते अतीवावश्यकानि वस्तूनि नाम – जलम् अन्नं वस्त्रञ्च । एतदपि अस्माकं राजा न जानाति । सङ्गीते नृत्ये च तस्य महती आसक्तिः । सर्वदा तस्मिन्नेव मग्नेन तेन अन्यकार्यस्य निमित्तं समयः एव न प्राप्यते । दूरात् आगतानां भवादृशानां कृते अपि मया एतादृशाः अकोमलरोटिकादयः दातव्याः भवन्ति । अत्युत्तमाः रोटिकाः दातव्याः इति अहम् इच्छामि । किन्तु किं करवाणि, अहमस्मि असहाया'' इति ।

राज्ञा ज्ञातं यत् एतावन्ति वर्षाणि मया घोरः अपराधः कृतः इति । सः स्वस्य नैजं परिचयं वदन् – ''भवत्याः पत्युः पाकः अपूर्वः । तस्य रुचिः अपि अनुपमा । राजप्रासादे स्थितान् पाचकान् पाककार्यं पाठयितुम् एषः योग्यः अस्ति । अतः सः प्रासादे पाचक-प्रमुखत्वेन तिष्ठतु । भवती अपि राज्ञ्याः आप्तसखी भूत्वा अस्मान् सर्वदा जागरयन्ती तिष्ठतु । इतःपरं प्रजानां योगक्षेमं पश्यन् अहं सर्वान् यथायोग्यं पालयिष्यामि । श्वः एव भवन्तौ मम प्रासादम् आगच्छताम्'' इति उक्तवान् ।

परेद्यवि पत्या सह प्रासादम् आगता रत्ना स्वगतम् उक्तवती – ''सर्वमपि राज्ञः कृपया'' इति ।





# परोपकारः

अरुणपुरनामके ग्रामे वीरमल्लः नाम कश्चन चोरः वसति स्म । सः गृहेषु चौर्यं कुर्वन्, मार्गे गच्छतः पथिकान् लुण्ठन् स्वजीवनं यापयति स्म । जीवने तेन किमपि पुण्यकार्यं न कृतम् एव ।

एकदा सः वीरमल्लः कस्मिंश्चित् गृहे चौर्यं कर्तुं गतः । यदा सः गृहं प्रविष्टः तदा तस्य अभासत यत् गृहस्य जनाः जागरिताः सन्ति इति । द्वौ परस्परं वार्तालापे मग्नौ दृष्टौ तेन । वीरमल्लः तयोः सम्भाषणं श्रुतवान् । कश्चित् तरुणः स्वमातरं वदन् आसीत् – ''अम्ब ! अहं श्वः प्रातः प्रतिवेशिग्रामं गमिष्यामि । अतः मम निमित्तं पाथेयबन्धद्वयं सिद्धं करोतु । मयि लीयमानम् एकम्, मृदि लीयमानम् अपरम्'' इति ।

तदा माता उक्तवती – ''अस्तु, तथैव करिष्यामि'' इति । ततः तौ उभौ अपि निद्रितौ ।

एतत् सम्भाषणं श्रुत्वा वीरमल्लः स्वकर्म चौर्यमपि विस्मृतवान् । तेन तरुणस्य वचनं किञ्चिदपि न ज्ञातम् । 'तस्य वचसः अर्थः कः इति ज्ञातव्यम् एव' इति इच्छा तस्य मनसि प्रबला जाता । तदर्थं सः प्रातःकालपर्यन्तं तत्रैव स्थितवान् ।

प्रभाते माता पुत्रः च उत्थितौ । पुत्रः प्रतिवेशिग्रामं प्रति गमनस्य सन्नाहे मग्नः । माता पाथेयबन्धद्वयम् आनीय पुत्रस्य हस्ते दत्तवती ।

मातुः हस्तात् पाथेयबन्धद्वयं स्वीकृत्य सः तरुणः गृहात् प्रस्थितः । ततः किञ्चित्-कालानन्तरं वीरमल्लोऽपि ततः प्रस्थितः । मध्याह्नपर्यन्तम् उभावपि गतवन्तौ । सः तरुणः भोजनं कर्तुम् एकस्य वृक्षस्य छायायाम् उपविष्टवान् । वीरमल्लोऽपि तस्यैव वृक्षस्य अधः उपविष्टवान् ।

तरुणः वीरमल्लं दृष्टवान् । ततः स्वसमीपे स्थितं पाथेयबन्धद्वयम् उद्घाट्य तयोः एकं स्वस्य पुरतः, अपरं वीरमल्लस्य पुरतः च

२५ वर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

स्थापितवान् । वीरमल्लः तरुणस्य कार्येण नितराम् आश्चर्यचकितः ।

'एषः तरुणः मां सर्वथा न जानाति । तथापि परिचयादिकं किमपि अपृष्ट्वा एव एषः तरुणः मह्यं पाथेयबन्धं दत्तवान् । कथमेतत् ?' इति आश्चर्यं प्राप्तवान् वीरमल्लः । सः एतावत्पर्यन्तं कदापि कस्यापि उपकारं न कृतवान् आसीत् । अतः अस्य तरुणस्य व्यवहारेण सः नितराम् आश्चर्यचकितः जातः आसीत् ।

अतः सः तरुणं पृष्टवान् - ''भ्रातः, मम कश्चन सन्देहः ! सन्देहं यदि भवान् दूरीकरोति तर्हि एव अहम् भोजनं स्वीकरोमि'' इति ।

''पृच्छतु, कः सन्देहः भवतः ?'' इति सः तरुणः उक्तवान् ।

''मम चौर्यमेव उद्योगः । ह्यः रात्रौ भवतः गृहं प्रति चौर्यार्थम् अहम् आगतः । तदा मातरम् उद्दिश्य भवता कथितं वचनम् अहं श्रुतवान् । तस्य वचनस्य अर्थः कः स्यात् इति ज्ञातव्यम् इति कुतूहलेन भवन्तम् अनुसरन् अहम् आगतः'' इति सः चोरः उक्तवान् ।

तदा सः तरुणः हसन् - ''पश्यतु, मया स्वीक्रियमाणः ओदनः मृदः भागः । भवते यः ओदनः दत्तः सः मम भागः'' इति उक्तवान् ।

''भवतः वचनं किञ्चिदपि मया न ज्ञातम् । मया स्वीकृतः ओदनः भवतः भागः कथं भवितुम् अर्हति ?'' इति वीरमल्लः अपृच्छत् ।

''मया खाद्यमानस्य आहारस्य एकः पुलाकः अपि मम न । यतः सर्वोऽपि पाचनेन मृदि लीयते । किन्तु यं भागं भवते ददत् अस्मि सः पुण्यकार्यरूपेण माम् एव अनुसरति । भवान् चौर्येण जीवति । तेन कः उपयोगः ? भवता अन्येषां कीदृशः उपकारः कृतः, येन अग्रे भवदर्थं किमपि सञ्चितं भवेत् ? इदानीमपि कालः न अतीतः । इतः परं यथाशक्ति परोपकारेण जीवनं यापयतु'' इति सः तरुणः तं बोधितवान् ।

तस्य वचनेन वीरमल्लस्य ज्ञानोदयः अभवत् । ततः परं तेन चौर्यं त्यक्तम् । श्रमेण कार्यं कुर्वन् सः आत्मना सम्पादितेन धनेन यथाशक्ति परेषामपि साहाय्यम् आरब्धवान् । एवं परोपकारेण जीवनं कुर्वन् सः सार्थकताम् अनुभूतवान् ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

26

चित्रं - महेशः

आदित्यस्य ग्रहणाय चन्द्रपुरीं गन्तुम् उद्यतः सेनापतिः नरेन्द्रदेवः नदीतरणसमये जले पतितः । मकराः तस्य हस्तं पादौ च खादन्ति । आदित्यः सर्पदेशम् आगत्य गुहामन्दिरं प्रविशति । तस्य अङ्गरक्षकाः तान्त्रिकस्य आप्तसहायकं रवीन्द्रदेवं च बध्नन्ति । नागबन्धुः घोरसर्परूपं प्राप्नोति । आदित्यस्य उष्णीषे स्थितं पिच्छं गरुडाकारतां प्राप्नोति । नागगरुडयोः युद्धम् अनुवर्तते ।

त्रिशिरस्कः सर्पः यदा अग्निकुण्डे पतति तदा तान्त्रिकबन्धुः उच्चैः चीत्करोति ।

अहो, कीदृशम् अन्त्यम् एतत् ।

गरुड ! महाशत्रो ! तादृशम् एकं दिनम् आगमिष्यति, यत्र च....

महता शब्देन सह गुहामन्दिरं पतितं सत् धूलिसात् भवति ।

गच्छ, इतः निर्गच्छ ।

गरुडः धूलितः बहिः आगत्य आदित्यरूपेण भूमौ उपस्थितः भवति । वनवासिनौ दम्पती भयमिश्रितेन आश्चर्येण तम् अभिनन्दतः ।

भवान् अस्मान् सर्वान् महतः कष्टात् रक्षितवान् ।

तेन यत् बलित्वं प्राप्तं तत् अपरिहार्यम् आसीत् ।

भवान् स्वजनानां समीपं गत्वा वदतु यत् इतः परं भीतेः न कोऽपि अवसरः इति । शान्तिपूर्णस्य जीवनस्य निमित्तं तेषां साहाय्यं करोतु ।

आदित्यः वनवासिनौ दम्पती वदति यत् पर्वतमूलप्रदेशं गच्छाम इति । अङ्गरक्षकाः द्वाभ्यां बन्दिभ्यां सह तान् अनुसरन्ति ।

यत्र नद्याः पारं प्राप्तुं शक्यं तत्र अस्मान् नयतु ।

अस्तु श्रीमन् !

ते नरेन्द्रदेवस्य समीपम् आगच्छन्ति । सः तत्र वृक्षम् अवलम्ब्य स्थितः अस्ति ।

तात ! आगच्छतु वयं सर्वे चन्द्रपुरीं प्रतिगच्छाम ।

नैव रवीन्द्र ! आमरणम् अहम् अत्रैव स्थास्यामि । राजानं सानुरोधं प्रार्थयतु यत् अहं क्षन्तव्यः इति ।

तान्त्रिकस्य आप्तपुरुषः आदित्यस्य समीपम् आगन्तुं प्रयतते । अङ्गरक्षकाः तं तत्रैव निवारयन्ति ।

महानुभाव ! अहम् अत्रैव स्थातुम् इच्छामि । चन्द्रपुरीं प्रति आगमनेच्छा नास्ति मम ।

रक्षक ! तं परित्यजतु । रवीन्द्रदेवम् एकम् एव नयाम ।

आदित्यः, रवीन्द्रदेवः, अङ्गरक्षकाः च जागरूकतया नदीं तरन्ति ।

रक्षक ! यदा तीरं प्राप्यते तदैव राजभवनं प्रति अस्मदागमनवार्तां प्रेषयतु ।

चन्द्रपुर्याः जनाः प्रधानमन्त्रिणः आदित्यस्य प्रत्यागमनतः सन्तुष्टाः सन्ति ।

आदित्यः मुख्यद्वारसमीपम् आगतः अस्ति । अहं तस्य स्वागताय गच्छन् अस्मि अरुणे !

अहं भवतोः प्रतीक्षां कुर्वती भवामि अत्रैव ।

राजा आदित्यः च परस्परम् आलिङ्गतः ।

महाराज ! अहं निरापदम् आगतः अस्मि ।

भवान् विजयं प्राप्य प्रत्यागतः अस्ति । अभिनन्दनानि । प्रजाः भवतः दर्शनाय नितरां समुत्सुकाः सन्ति ।

अरुणा द्वारमण्डपप्रदेशे तैः मिलति ।

आदित्य ! अहं सन्तानरहितः इति भवान् जानाति एव । अहम् अरुणां दत्तकरूपेण स्वीकरिष्यामि । किं तां भवान् परिणयेत् ?

महाराज ! अहं भवतः आज्ञां कथं तिरस्कर्तुं शक्नुयाम् ?

राजभवनस्य प्राङ्गणं जनप्रवाहेण पूर्णम् अस्ति । सर्वे जयकारं कुर्वन्ति ।

मातृभूमेः संरक्षक !

प्रधानमन्त्रिणः स्वागतम् ।

वीरः आदित्यः जयतात् ।

मम प्रियमित्राणि ! दीर्घकालस्य अनन्तरं अहं भवतां सेवायै उपस्थितः अस्मि ।

राज्ञः वचनानि वयं श्रोतुम् इच्छामः ।

जनसमूहे शान्तिः प्रसृता भवति ।

वत्साः ! अहम् आदित्यं युवराजपदव्यां नियुञ्जानः अस्मि । सः अरुणां परिणेष्यति । अरुणा मया पुत्रीत्वेन स्वीकृता अस्ति ।

रवीन्द्रदेवं रक्षकाः गृहीत्वा नयन्ति ।

प्रभो ! प्रभो !

अरुणा महेन्द्रश्च राजभवनं प्रविशतः । आदित्यः स्व-निवासस्थानं प्रति गच्छति । तत्र गतः सः पितुः प्रतिमायाः पुरतः तिष्ठति ।

तात ! अहं भवदाशीर्वादम् इच्छामि ।

जयकारस्य ध्वनिः आकाशं स्पृशति । ध्वनेः समाप्तेः अनन्तरं राजा रवीन्द्रदेवं प्रदर्शयन् वदति ।

नरेन्द्रदेवस्य पुत्रः रवीन्द्र-देवः राजद्रोही अस्ति ।

सेनापतिं मकराः विकलाङ्गं कृतवन्तः सन्ति । सः प्रत्यागन्तुं न अर्हति ।

अहं तं देशात् बहिष्कुर्वन् अस्मि ।

महाराज ! मयि कृपया दयां करोतु ।

आदित्यः स्वस्य उष्णीषे स्थापितं पिच्छं निष्कासयति । गरुडप्रतिमायाः पुरतः स्थापयति च । ततः सः नेत्रे निमील्य ध्यानमग्नः भवति । तदा कश्चन ध्वनिः श्रूयते तेन ।

आदित्य ! तादृशः कश्चन समयः पुनः आगच्छेत्, यस्मिन् च मातृभूमेः रक्षणाय भवतः निमन्त्रणं पुनः भवेत् । गरुडः भवन्तम् आशीर्वादेन रक्षिष्यति ।

समाप्तम्

# कालोऽयं विनोदस्य

मित्राणि ! मम हस्ते यत् पुष्पम् अस्ति तत्सदृशं पुष्पं किम् इति किं भवन्तः अभिज्ञातुं शक्नुयुः ?




अहो , मम पुच्छे स्फोटकमाला बद्धा अस्ति ! एतयोः चित्रयोः मध्ये सप्त भेदांशाः सन्ति । किं तान् अविलम्बेन ज्ञातुं शक्नुयुः भवन्तः ?

2





एतेषां पर्णानां पृष्ठभूमिकायां बहवः ज्ञातपूर्वाः पशुपक्षि-प्रभृतयः सन्ति । किं तान् निर्दिशेयुः भवन्तः ?

3

शम्बूकः चाकलेहस्य अन्वेषणाय उद्युक्तः । व्यूहे योग्येन मार्गेण गमनाय किं भवन्तः तस्य साहाय्यं कुर्युः ?

(उत्तराणि ६६ तमे पृष्ठे)



4




# चित्रशीर्षिकास्पर्धा


M. Kameswara Rao


Mahantesh C. Morabad

**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –
चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'मे'मासस्य चित्रशीर्षिकाप्रेषकः –**
**सि. एस्. आर्. लिङ्गारेड्डी**
*२५८०, आर्यसमाजः, शादीपुरम्, खामपुरम्*
*नईदिल्ली – ११० ००८*

### पुरस्कृतशीर्षिका



**विघ्नान् अतिक्रम्य प्राप्स्यामि दूरलक्ष्यम् ।**
**विना विघ्नं पश्यामि दूरवस्तु ।**

**मनोविनोदस्य उत्तराणि – (पृ. ६४,६५)**

१. षष्ठं पुष्पं सदृशम् अस्ति ।
२. सप्त भेदाः च – स्फोटकानि, व्याघ्रस्य पुच्छम्, कोपे कुङ्कुमम्, गजस्य कर्णः, गजस्य पट्टिका, शृगालस्य जिह्वा, पादत्राणसूत्रं च ।
३. प्राणिनः च – गजः, सिंहः, काङ्गरू, गर्दभः, मयूरः, कारण्डवः, शुकः, शशः, अजः, गृध्रः, शृगालः, मीनः, हरिणः, काकः च ।


Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

